प्रसार्य पुनरानीतौ हस्तौ पादौ यदा पुनः ।
गात्रमुद्वृत्तचारीकमुद्वृतं तत् प्रकीर्तितम् ॥ १६५

॥ इत्युद्वृत्तम् ॥ ९४ ॥

*

चारीं च जनितां कृत्वा करं कुर्याल्लताभिधम् ।
अन्यं वक्षःस्थितं मुष्टिकरणं जनितं तदा ।
क्रियारम्भोऽभिनेतव्य एतेन महतां नृणाम् ॥ १६६

॥ इति जनितम् ॥ ९५ ॥

*

करौ संघट्टिततलौ रचयित्वा पताककौ ।
दोलापादां भजेच्चारीं वैष्णवस्थानके स्थितः ॥ १६७
दक्षिणं कटिदेशस्थं वामं रेचितमाचरेत् ।
तलसंघट्टितं तत् स्यादनुकम्पार्थगोचरम् ॥ १६८

॥ इति तलसंघट्टितम् ॥ ९६ ॥

*

आकाशाभिमुखो यत्र कुञ्चितश्चरणो व्रजेत् ।
रेचितौ च करौ विष्णुक्रान्तं स्यात् क्रमणे हरेः ॥ १६९

॥ इति विष्णुक्रान्तम् ॥ ९७ ॥

*

विधाय चारीमाक्षिप्तां वामतस्तदनन्तरम् ।
हस्तं विधाय व्यावृत्तं परिवर्तनकारकम् ॥ १७०
अरालतां नयेदेनं नते दक्षिणपार्श्वके ।
एतच्चापसृतं ज्ञेयं विनयेनो( ? ना )पसर्पणे ॥ १७१

॥ इत्यपसृतम् ॥ ९८ ॥

*

वैष्णवे स्थानके पाणिरेको वक्षसि रेचितः ।
अन्योऽलपल्लवः शीर्षे लोलितं पार्श्वयोर्द्वयोः ।
विश्राम्यति यदा प्राहुर्लोलितं करणं तदा ॥ १७२

॥ इति लोलितम् ॥ ९९ ॥

*

क्रमेण स्वस्तिकौ पादौ तथैवापसृतौ शिरः ।
परिवाहितमानीतौ दोलौ हस्तौ यदा तदा ।
मदस्खलितकं प्राहुः प्रयोज्यं मध्यमे प(?म)दे ॥ १७३

॥ इति मदस्खलितम् ॥ १०० ॥

*

हस्तरेचितकं कुर्वन् कुर्याच्चारीमलातिकाम् ।
कुञ्चितौ च करौ कृत्वा व्यावर्तनविधानतः ॥ १७४
कृत्वालपद्मौ न्यस्येते करौ चेद्वाहुशीर्षयोः ।
वृषभक्रीडितं प्राहुस्तदा करणमुत्तमम् ॥ १७५
॥ इति वृषभक्रीडितम् ॥ १०१ ॥

*

चार्यामाविद्धसंज्ञायां व्यावृत्तपरिवर्तितम्[1] ।
अलपद्मं करं न्यस्येदूरूपृष्ठे यदा तदा ।
ससंभ्रमगतौ योज्यं सभ्रान्तं करणं भवेत् ॥ १७६
॥ इति संभ्रान्तम्[2] ॥ १०२ ॥

*

चारीं संघट्टितां कृत्वा पार्श्वे तत्संनतिं नयेत् ।
करौ समुद्यतौ कर्तुं तालिकां च यदा तदा ।
उद्घट्टितं प्रयोक्तव्यं नृत्ये तज्ज्ञैः प्रमोदकैः ॥ १७७
॥ इत्युद्घट्टितम् ॥ १०३ ॥

*

सूचीमुखो नृत्यहस्तो दक्षिणश्चेदपेत्य च ।
उपव्रजेत् करं वामं सोऽङ्घ्रिर्वामो निकुट्टकः ॥ १७८
एवमङ्गान्तरेऽपि स्यात् सूच्यङ्घ्रिर्दक्षिणः करः ।
दक्षिणोऽप्यलपद्मः स्यात् वामहस्तोऽपि पूर्ववत् ।
एवं पुनः पुनर्यत्र विष्कुम्भं तत् प्रकीर्तितम् ॥ १७९
॥ इति विष्कुम्भम् ॥ १०४ ॥

*

चारी तु शकटास्या स्यादेको हस्तः प्रसारितः ।
अङ्घ्रिणा सह हस्तोऽन्यो वक्षःस्थः खटकामुखः ।
यत्रैतत् शकटास्यं स्यात् प्रयोज्यं बालखेलने[3] ॥ १८०
॥ इति शकटास्यम् ॥ १०५ ॥

*

अरालखटकौ हस्तौ यत्र व्यावर्तनान्वितौ ।
सहोरूद्वृत्तया चार्या निदध्यादूरुपृष्ठयोः ।
ऊरूद्वृत्तं प्रेमकोपप्रार्थनेर्ष्यासु कीर्तितम् ॥ १८१
॥ इति ऊरुद्वृत्तम् ॥ १०६ ॥

*

---

1 ABC परिवृत्तितम् । 2 ABC repeat ससंभ्रमगतौ योज्यं from the Sambhrānta karaṇa. 3 ABC खेदने ।

हस्तौ रेचयेच्छीर्षं परिवाहितमाचरेत् ।
स्वस्तिकापसृतौ[1] कुर्यात् पादौ नागापसर्पिते ।
प्रयोज्यमेतदिच्छन्ति प्रायेण तरुणे मदे ॥ १८२

॥ इति नागापसर्पितम् ॥ १०७ ॥

*

अङ्घ्रावुत्क्षिप्यमाणेऽपि तथा निक्षिप्यमाणके ।
त्रिपताकौ भजेतां चेदनु प्रोन्नतिसंनताम् ॥ १८३
तद्वदेव शिरश्चेत् स्याद्गङ्गावतरणं तदा ।
गङ्गावतारे निर्दिष्टं मुनिना सर्वदर्शिना ॥ १८४

॥ इति गङ्गावतरणम् ॥ १०८ ॥

*

प्रायो वक्षःस्थितः कार्यो वा[2]मस्तु करणे करः ।
दक्षिणस्तु करस्तत्तत्करणस्यानुगः स्मृतः ॥ १८५
तलपुष्पपुटस्यादौ प्रयोगाद् ज्ञायते किल ।
पुष्पैः स्याद्देवतापूजामङ्गलार्थतयेति च ॥ १८६
गङ्गावतरणस्यान्ते कीर्तनान्मङ्गलान्तता ।
सर्वकार्येषु विज्ञेयेत्यवदद्भरतो मुनिः ॥ १८७

॥ इत्यष्टोत्तरशतं करणानि ॥ १०९ ॥

*

श्रीमत् कुम्भलमेरावर्बुदशिखरे च चित्रकूटे च ।
दुर्गवरौ वरपदवी यत्करणं राजते जगति ॥ १८८

इति श्रीराजाधिराजश्रीकुम्भकर्णमहीमहेन्द्रेण विरचिते सङ्गीतराजे षोडशसाहस्र्यां सङ्गीतमीमांसायां नृत्यरत्नकोशे करणोल्लासे शुद्धकरणाभिधानं प्रथमं परीक्षणं [समाप्तम् ।]

---

## तृतीयोल्लासे द्वितीयं परीक्षणम् ।

### [ मङ्गलम् । ]

यमन्तःकरणेष्वाद्या नित्यामारोप्य तन्वतः ।
विचिन्तयन्ति तं वन्दे करणातीतमीश्वरम् ॥ १

*

अथ देशीपूर्वकाणि बृहद्देशीविदांवरः ।
करणानि समाचष्टे कुम्भकर्णो धराधिपः ॥ २
अश्वितं चैकक(?च)रणाश्वितं स्याद्भैरवाश्वितम् ।
दण्डप्रणामाश्वितं च कर्तर्यश्वितमेव च ॥ ३

---

1 AC °स्तिकोप° । 2 ABC याम° ।

तिर्यगञ्चितकं तद्वत् समपादाञ्चितं तथा ।
भ्रान्तपादाञ्चितं च[1] करणं स्यात्ततः परम् ॥ ४
अलगं कूर्मालगं चोर्ध्वालगं चान्तरालगम् ।
लोहडीं च तथा चान्यैकपादलोहडी तथा ॥ ५
कर्तरी लोहडी चैव स्याद्दर्पसरणं तथा ।
जलादिशयनं नागबन्धं कपालचूर्णनम् ॥ ६
नतपृष्ठं तथा मत्स्यकरणं च प्रकीर्तितम् ।
करस्पर्शनसंज्ञं च तथैवैणप्लुतं मतम् ॥ ७
तिर्यक्करणसंज्ञं च तिर्यक्स्वस्तिकमेव च ।
स्कन्धभ्रान्तं खण्डसूचि समसूचि ततः परम् ॥ ८
ततो विषमसूचीति बाह्यभ्रमरिका ततः ।
अन्तर्भ्रमरिका चैव छत्रभ्रमरिका तथा ॥ ९
तिरिपभ्रमरी चाथ लगभ्रमरिकेति च ।
चक्रभ्रमरिका नामोचितभ्रमरिका तथा ॥ १०
शिरोभ्रमरिका चैव तथा दिग्भ्रमरीति च ।
एवमुत्प्लुतिपूर्वाणि षट्त्रिंशत्संमितानि च ।
करणानि समासेन लक्षिष्यन्ते यथागमम् ॥ ११

*

स्थित्वा वै समपादेनोत्तानश्चेदुत्प्लुतेन्नटः ।
तदाञ्चितं स्यात् करणम् ।

॥ इत्यञ्चितम् ॥ १ ॥

*

एकपादाञ्चितं तथा ॥ १२
यद्येतदेकपादेन निर्मितम् ।

॥ इत्येकक(?च)रणाञ्चितम् ॥ २ ॥

भैरवाञ्चितम् ॥

*

भैरवाञ्चितमूरुपृष्ठे स्थितैकाङ्घ्रिरुत्प्लुतौ ॥ १३

॥ इति भैरवाञ्चितम् ॥ ३ ॥

*

यदाञ्चितवदुत्प्लुत्य निपतेद्भुवि[2] दण्डवत् ।
दण्डप्रणामाञ्चितकं वदति नृत्यकोविदः ॥ १४

॥ इति दण्डप्रणामाञ्चितकम् ॥ ४ ॥

*

---

1 AB चैव करणं । 2 ABC निपतेद्भुवि । यदाञ्चितवदुत्प्लुत्य दण्डवन्नृत्यकोदिरः । दण्डप्रणामाञ्चितकं ।

कर्त्तर्यश्चितमेव च ।
चरणाभ्यां स्वस्तिकाभ्यामश्चिते परिकीर्तितम् ॥ १५

॥ इति कर्तर्यश्चितम् ॥ ५ ॥

*

समपादात् परं तिर्यगुत्प्लुतौ तिर्यगश्चितम् ॥ १६

॥ इति तिर्यगश्चितम् ॥ ६ ॥

*

विधाय पादावूर्ध्वाग्रौ समौ स्कन्धेन भूतलम् ।
आक्रम्योल्लालयेत्पादौ परिवर्तनमाचरेत् ।
तिर्यग्यत्र क्रमादेतत् समपादाश्चितं विदुः ॥ १७

॥ इति समपादाश्चितम् ॥ ७ ॥

*

दक्षिणाङ्घ्रिं भ्रामयित्वा तदीयतलपृष्ठतः ।
वामाङ्घ्रिजङ्घामध्यं चेदवष्टभ्याश्चितं ततः ॥ १८
कृत्वा धरित्रीं स्कन्धाभ्यामधिष्ठाय विवर्तनम् ।
विधायोल्लालयेत्पादौ भ्रान्तपादाश्चितं तदा ॥ १९

॥ इति भ्रान्तपादाश्चितम् ॥ ८ ॥

*

उत्प्लुत्याधोमुखोऽग्रे च पतित्वा कुक्कुटासनम् ।
यत्र बध्नाति तत्प्रोक्तमलगं करणोत्तमम् ॥ २०

॥ इत्यलगम् ॥ ९ ॥

*

यदि स्यादलगे कूर्मासनं कूर्मालगं तदा ॥ २१

॥ इति कूर्मालगम् ॥ १० ॥

*

समाङ्घ्रेरूर्ध्वसंस्थाने पतित्वोर्ध्वालगं भवेत् ॥ २२

॥ इत्यूर्ध्वालगम् ॥ ११ ॥

*

कृत्वालगं निपत्योर्व्यामुत्तानोरःस्थलं स्थितः ।
पृष्ठतः शिरसा श्रोणिं स्पृशेचेदन्तरालगम् ॥ २३

॥ इत्यन्तरालगम् ॥ १२ ॥

*

यत्र कृत्वा समौ पादौ विवृत्य त्रिकमुत्प्लुतेत् ।
तिर्यक् तल्लोहडीसंज्ञम् ।

॥ इति लोहडी[1] ॥ १३ ॥

*

लोहडीलुण्ठितं भुवा ॥ २४

1 ABC put लोहडी after °भुवा । But लोहडी लुण्ठितं भुवा seems to be a part of the definition of एकपाद लोहडी.

एकपादप्रयुक्तेयमेकपादादिलोहडी ॥ २५

॥ इत्येकपादलोहडी ॥ १४ ॥

*

एकपादलुठितं वा ।
लोहड्येव स्वस्तिकाङ्घ्रिरचिता लोहडी( ? कर्तरी )मता ॥ २६

॥ इति कर्त्तरीलोहडी ॥ १५ ॥

*

दर्पसरणं प्रोच्यतेऽधुना ।
वैष्णवं स्थानमास्थाय पृथ्व्यां चेत् पार्श्वतः पतेत् ॥ २७

॥ इति दर्पसरणम् ॥ १६ ॥

*

जलशायिवदेतत् स्यादासने जलशायिकम् ॥ २८

॥ इति जलशयनम् ॥ १७ ॥

*

तदेव नागबन्धं स्यान्नागबन्धवदासने ॥ २९

॥ इति नागबन्धम् ॥ १८ ॥

*

समपादस्थितो भूमौ शीर्ष्णा संस्पृश्य भूतलम् ।
परावृत्तिं वितनुते कपालचूर्णितं हि तत् ॥ ३०

॥ इति कपालचूर्णितम् ॥ १९ ॥

*

कपालचूर्णेन जाते वक्षस्युत्तानिते नते ।
नतपृष्ठं परैरुक्तं वंकोलं करणं त्विदम् ॥ ३१

॥ इति नतपृष्ठम् ॥ २० ॥

*

कृत्वोत्प्लवनमावर्त्य मध्यं पार्श्वेन मत्स्यवत् ।
वामेन परिवर्तेचेत्त(?तत)न्मत्स्यकरणं भवेत् ॥ ३२

॥ इति मत्स्यकरणम् ॥ २१ ॥

*

अलगं विधाय करणं हस्तेनाश्रित्य नर्तकीं भूमिम् ।
परिवर्तेत यदेदं स्पर्शनमुक्तं कराद्यं तत् ॥ ३३

॥ इति करस्पर्शनम् ॥ २२ ॥

*

कृत्वोत्प्लवनं सूचीमन्यतमां खे विधाय चेद्व्रजते ।
भूमावूर्ध्वस्थानं यदोत्कटासनं तदाप्लुतं चैणम् ॥ ३४

॥ इत्येणप्लुतम् ॥ २३ ॥

*

तिरश्चैकेन पादेन समुत्प्लुत्य निपत्य चेत् ।
एकपादेन पृथ्व्यां चेत्तिष्ठेत्तिर्यक्कृतिस्तदा ॥ ३५

॥ इति तिर्यक्करणम् ॥ २४ ॥

*

तिर्यक्स्वस्तिकमुत्प्लुत्य स्यात्तिर्यक्स्वस्तिके कृते ॥ ३६

॥ इति तिर्यक्स्वस्तिकम् ॥ २५ ॥

*

पृथ्व्यां स्थित्वांसयुग्मेन कृत्वा चैवोत्कटासनम् ।
करणं चाश्रितं कृत्वा धृत्वाङ्घ्रान्तरमम्बरे ॥ ३७
बाहुभ्यां भुवमाक्रम्य भ्रामं भ्रामं च पूर्ववत् ।
तिष्ठेत् प्रतिदिशं यत्र तत् स्कन्धभ्रान्तमुच्यते ॥ ३८

॥ इति स्कन्धभ्रान्तम् ॥ २६ ॥

*

सूचीनां त्रितयं प्रोक्तं तद्द्विधा परिकीर्तितम् ।
भौमाकाशविभेदेन समाद्यन्यतमां यदि ॥ ३९
करणानि दधत्यन्ते सूचीं प्राक्कथितानि तु ।
सूच्यन्तानि तदा तानि जायन्त इति सूरयः[1] ॥ ४०

॥ इति सूच्य[न्त]म् ॥ २७ ॥

*

सव्येतरेण पादेन स्थित्वा सव्याङ्घ्रिकुञ्चनात् ।
सव्यावर्तं भ्रमेद्यत्र सा बाह्यभ्रमरी मता ॥ ४१

॥ इति बाह्यभ्रमरी ॥ २८ ॥

*

अस्या एव विपर्यासादन्तर्भ्रमरिका भवेत् ॥ ४२

॥ इति अन्तर्भ्रमरी ॥ २९ ॥

*

स्थित्वैकेनाङ्घ्रिणा भूमौ दण्डवच्चोत्क्षिपेत् परम् ।
सव्यावर्तं भवेद्यत्र सा छत्रभ्रमरी मता ॥ ४३

॥ इति छत्रभ्रमरी ॥ ३० ॥

*

अङ्घ्रिस्वस्तिकमाधाय तिर्यग्भ्रमणतो भवेत् ॥ ४४

॥ इति तिरिपभ्रमरी ॥ ३१ ॥

*

---

1 Khaṇḍasūci, Viśamasūci and Samasūci-all the three seem to be described here.

वैष्णवं स्थानकं कृत्वा तिष्ठेत् सव्याङ्घ्रिणा ततः ।
देहं भ्रामयतस्तिर्यगलगभ्रमरी भवेत् ॥ ४५

॥ इत्यलगभ्रमरी ॥ ३२ ॥

*

खण्डसूच्या भ्रमाच्चक्रवच्चक्रभ्रमरी भवेत् ॥ ४६

॥ इति चक्रभम्ररी ॥ ३३ ॥

*

देहस्य तिर्यग् भ्रमणात् समपादादनन्तरम् ।
उचितभ्रमरीं नाम ब्रूते शङ्करकिङ्करः ॥ ४७

॥ इति उचितभ्रमरी ॥ ३४ ॥

*

सा शिरोभ्रमरी ज्ञेया शिरसैव भुवि स्थिता ।
पादावूर्ध्वीकृतौ बिभ्रत् त्रिशो भ्रमणतो द्रुतम् ॥ ४८

॥ इति शिरोभ्रमरी ॥ ३५ ॥

*

भ्रामं भ्रामं सकृत् प्राग्वद्यत्र हस्तधृतक्षिति ।
चतुर्दिक्च क्रमात्तिष्ठेत्तदा दिग्भ्रमरी मता ॥ ४९

॥ इति दिग्भ्रमरी ॥ ३६ ॥

*

अन्येऽपि सन्ति भूयांसो भेदाः करणसंश्रयाः ।
स्वयं बुद्धिमतोह्यास्ते न प्रोक्ता विस्तराद्भिया ॥ ५०

उच्चैर्यदीयकरणानि मनोहराणि
तत्तत्स्वदेशललनालपनेषु चित्रम् ।
तेन त्रिलोकपरितोषकराणि राज्ञा
देशप्रसिद्धकरणानि विनिर्मितानि ॥ ५१

इति श्रीराजाधिराजश्रीकुम्भकर्णमहीमहेन्द्रेण विरचिते सङ्गीतराजे षोडशसाहस्र्यां सङ्गीतमीमांसायां नृत्यरत्नकोशे करणोल्लासे देशीकरणनिरूपणं नाम द्वितीयं परीक्षणं समाप्तम् ॥२॥

---

[ आनन्दसञ्जीवनाद् उद्धृतं भ्रमरीविषयकं प्रकरणम् । ]

अथ आनन्दसंजीवनमध्यात्[1]–

चारीहस्तकसङ्गात् करणानि विदुर्बुधाः ।
प्रभवन्ति भिदास्तेषां भेदास्ते रससंमिताः ॥ १

क्वचिच्चारीवशाना( ? न्ना )म क्वचिद्धस्तकपूर्वकम् ।
प्रसादे क्रियमाणे स्यात् कर्तव्यं नाट्यपण्डितैः ॥ २

---

1 BC ॥ श्री ॥

यथा गीते सदाभोगः शिखरत्वे निरूपितः ।
तथा नृत्ये च तासां तु नर्तनं कलशोपमम् ॥ ३
आभोगनर्तने प्रोक्ता भ्रमर्यो मुख्यतो बुधैः ।
विशेषाद्भ्रमकादीनां सुप्रभास्ताः प्रकीर्तिताः ॥ ४
भरतोक्ता अपि त्यक्त्वा अल्पाल्पाः करणे स्वके ।
ताभ्यः कियत्यो वक्ष्यन्ते कामसंजीविकास्तु याः ॥ ५

*

पताकं हृदये न्यस्य करेऽन्यस्मिन् प्रसारिते ।
तदेवाङ्गं बहिः क्षिप्त्वा भ्रमणाद् हृदयङ्गमाः ।
भ्रमे यत्र स्मृतोऽभ्यासस्सुहृद्भिस्त्रिःपुरःसरम् ॥ ६

॥ इति हृदयंगमाः ॥ १ ॥

*

बाह्वोः पताकौ संन्यस्य भ्रमणादङ्कमौलिका ।
शिरःपल्लविका चाथ द्वितीया कथ्यतेऽधुना ॥ ७
ललाटे तु पताकः स्या[द्] भवेदन्यः प्रसारितः ।
बाह्वोः प्रसारणं कृत्वा करौ स्यातां द्रुतभ्रमौ ।
नर्तनाच्च शिरोदेशे द्वितीया शीर्षपल्लवा ॥ ८

॥ इति शीर्षपल्लवाद्वयम् ॥ २ ॥

*

एकाङ्घ्रिं कुञ्चितं कृत्वा द्वितीये पार्ष्णितः स्थिते ।
यथोल्लासकरौ तस्यां भ्रमणात् कुञ्चिता मता ॥ ९

॥ इति कुञ्चिता ॥ ३ ॥

*

ताले ताले कुञ्चिता स्यात् तथैवाङ्कस्थिता सती ।
कुञ्चिताया द्रुतस्पर्शा विज्ञेया भूमिपल्लवा ॥ १०

॥ इति भूमिपल्लवा ॥ ४ ॥

*

प्रसार्य बाहुयुगले समे वाङ्घ्रिद्वये स्थिता ।
तत्र वेगभ्रमणतो विज्ञेया चक्रवर्तिनी ॥ ११

॥ इति चक्रवर्तिनी ॥ ५ ॥

*

सकृद्रेचितहस्तश्चेत् त्यक्त्वा स्थानं च संभ्रमात् ।
मण्डला सापि निर्दिष्टा द्विधाऽन्या सा प्रकीर्तिता ॥ १२

लास्ये तु या भुवस्त्यक्तं वस्तु गृह्णातु पण्डितः ।
मुहुर्मुहुः भ्रमी या सा लास्यमण्डलिका तु सा ॥ १३

॥ इति लास्यमण्डलिका ॥ ६ ॥

*

तिर्यक् स्वास्फालनेनैव भ्रमणाल्लम्बहस्तयोः ।
तिर्यग् मण्डलिका नाम द्वितीयेयं प्रकीर्तिता ॥ १४

॥ इति तिर्यग्मण्डलिका ॥ ७ ॥

*

सकृत् पार्ष्णिगता भ्रान्त्वा चक्रवद्वेगिता सती ।
तथैवोपविशेद्भूमौ लयात् सिंहासना मता ॥ १५

॥ इति सिंहासना ॥ ८ ॥

*

भ्रमती मण्डले या सा त्वराभ्रमणसंगता ।
पार्ष्णिजभ्रमरीत्युक्ता मुहुः सा परिमण्डली[1] ॥ १६

॥ इति परिमण्डली ॥ ९ ॥

*

धूनयती करौ स्वीयौ पादयोः कुञ्चिताग्रयोः ।
न्युब्जं तिर्यग् ययोः कुर्याद् मुहुस्तिर्यक्कृते मते ॥ १७

॥ इति न्युब्जकृता ॥ १० ॥

*

स्थित्वा चैकाङ्घ्रिणा चान्यं दण्डवच्च प्रसारयेत् ।
यथा भ्रमति सा तस्माद्विज्ञेया तलदर्शिनी ॥ १८

॥ इति तलदर्शिका ॥ ११ ॥

*

तिर्यक्पताके चोत्ताने त्वन्येनाच्छादिते सति ।
यथा भ्रमयाँ[2] भ्रमरी प्रोक्ता मेलापनी बुधैः ॥ १९

॥ इति मेलापनी ॥ १२ ॥

*

बह्वयश्चान्या भवन्त्येताः सव्यजा अपसव्यजाः ।
लास्येनैव समुद्भूता धन्यास्ता अन्यतोऽधमाः ॥ २०
एतद्राज्ञां पुरंध्रीणामुद्दिष्टं यन्मयाधुना ।
नात्र ग्राम्यकृता भावा योज्यास्ते नाट्यकोविदैः ॥ २१
मस्तका भ्रमरी विद्यादथो न्युब्जादिपातनम् ।
अङ्घ्रेर्भूमेश्च यो योगः स च नैसर्गिको मतः ।
अन्याङ्गेन समायोगो न कार्यश्च नरैः सदा ॥ २२

---

1 BC परीमंडली । 2 ABC repeat भ्रामरी ।

उच्चैर्यदीयकरणानि मनोहराणि
तत्तत्स्वदेशललनालपमे(?ने)षु चित्रम् ।
तेन त्रिनेत्रपरितोषकरेण राज्ञा
देशप्रसिद्धकरणानि विनिर्मितानि ॥ २३

॥ इति भ्रमर्यः ॥ १३ ॥

---

## तृतीयोल्लासे तृतीयं परीक्षणम् ।

*

किमङ्गहारस्तव नागराजः किं नागराजस्य हृतिस्तवाङ्गे ।
इत्थं ह सोक्तो नगराजकन्यया ननर्त देवः सकलाङ्गहारकैः ॥ १

*

### [ अङ्गहाराः । ]

न व्यग्रैः करणैर्दृष्टमदृष्टं वा प्रसाध्यते ।
अतस्तद्द्वयसंपत्त्यै तत्समूहं ब्रुवेऽधुना ॥ २
यच्छिरःप्रमुखाङ्गानां प्रदेशमुचितं प्रति ।
प्रापणं सविलासं तदङ्गहारोऽभिधीयते ॥ ३
अङ्गप्रयोगयोगेन ये हारा हरनिर्मिताः ।
मध्यस्थपदलोपेन तेऽङ्गहाराः स्मृता बुधैः ॥ ४
[1]औचित्यान्मेलनेऽङ्गानां प्रयोगः क्रमपेशलः ।
करणं कीर्त्यते तज्ज्ञैस्तद्द्वयं मातृकाः स्मृताः ॥ ५
त्रिभिः कलापकस्तैश्च चतुर्भिः खण्डको मतः ।
संघातः पञ्चभिस्तैश्च संज्ञाभेदा इतीरिताः ॥ ६
तत्समूहविशेषश्चाङ्गहारस्तत्परः स्मृतः ।
तिसृभिः पञ्चभिर्वा स्यान्नवभिर्वा यथोदितम् ॥ ७
अङ्गहारो मातृकाभिरेकः स्यान्मुनिनोदनात् ।
करणन्यूनताधिक्यं यत्र नो दूषणाय तत् ॥ ८
मुनिनैव स्वयं सूत्रे विकल्पस्यानुशासनात् ।
परिभाषाङ्गहाराणां मयैवादौ प्रदर्शिता ॥ ९
अथोद्देशपरं लक्ष्म यथाशास्त्रं प्रदर्श्यते ।

---

1 ABC ऊचित्यान्नेलने ।

स्थिरहस्तोऽथ पर्यस्तो भ्रमरश्चापसर्पितः ॥ १०
आक्षिप्तोऽथ परिच्छिन्नस्तथा वैशाखरेचितः ।
पार्श्वस्वस्तिकसंज्ञश्च सूचीविद्धोऽपराजितः ॥ ११
मदाद्विलसिताख्यश्च मत्ताक्रीडस्ततः स्मृतः ।
आलीढश्चाच्छुरितकः पार्श्वच्छेदाभिधस्ततः ॥ १२
विद्युद्भ्रान्त इति प्रोक्ता अङ्गहारास्तु षोडश ।
मानेन चतुरस्रेण मानदानविपश्चिता ॥ १३
विष्कुम्भापसृतो मत्तस्खलितो म(?ग)तिमण्डलः ।
अपविद्धश्च विष्कुम्भोद्धट्टिताक्षिप्तरेचिताः ॥ १४
रेचितोऽर्धनिकुट्टश्च वृष्णि(?श्चि)कापसृतस्ततः ।
अलातकः परावृत्तः परिवृत्तकरेचितः ॥ १५
उद्वृत्तश्चैव संभ्रान्तस्ततः स्वस्तिकरेचितः ।
षोडशैते त्र्यस्रमाना द्वात्रिंशदुभयेऽप्यमी ॥ १६
करणव्रातसंदर्भविशेषश्चाङ्गहारकः ।
इत्युक्ते स्यात्तदानन्त्यं ग्रन्थवैचित्र्यहेतुकम् ॥ १७
प्राधान्यं विनियोगस्य समाश्रित्येयतां कृता ।
गणना गुम्फवैचित्र्यात् स्वयमूह्याः परैप(?रस्प)रैः ॥ १८
लीनं समनखं कृत्वा व्यंसितं च निकुट्टकम् ।
ऊरूद्वृत्तं विधायाथ स्वस्तिकाक्षिप्तके तथा ॥ १९
नितम्बं करिहस्तं च कटीछिन्नमिति क्रमात् ।
दशभिः करणैः प्रोक्तः स्थिरहस्तो महीभृता ।
द्वात्रिंशदङ्गहारेषु ज्ञेयमन्तमवस्थितम् ॥ २०

*

[ चतुरस्रमानेनाङ्गहाराः । ]

अनुक्तमपि तत्त्वज्ञैः कटीछिन्नं तु लक्ष्मगम् ।
विधाय लक्ष्म सूत्रस्थं करणद्वन्द्वमादितः ॥ २१
चतुर्दिक्षु ततोऽन्यानि करणानि क्रमेण च ।
नृत्यवैचित्र्यमाधातुमङ्गहारेषु वर्तयेत[1] ॥ २२

॥ इति स्थिरहस्तः ॥ १ ॥

*

तलपुष्पपुटं तद्वदपविद्धं च वर्तितम् ।
निकुट्टमूरूद्वृत्ताख्यमाक्षिप्तं तदनन्तरम् ॥ २३

---

1 BC वर्तते ।

उरोमण्डलमास्थाय नितम्बं करिहस्तकम् ।
दशभिः करणैरेभिः कार्यः पर्यस्तकाभिधः ॥ २४
॥ इति पर्यस्तकः ॥ २ ॥
*
नूपुरं च तथाक्षिप्तं छिन्नं सूचीनितम्बकम् ।
करिहस्तं तथा चोरोमण्डलकमतोऽष्टभिः ।
एभिस्तु करणैः प्रोक्तो भ्रमरो भ्रमपेशलः ॥ २५
॥ इति भ्रमरः ॥ ३ ॥
*
अपक्रान्तं व्यंसितस्य केवलं करजाः क्रियाः ।
करिहस्तं चार्धसूचि विक्षिप्तं च ततः परम् ॥ २६
कटीछिन्नं तथा चोरूद्वृत्तमाक्षिप्तकं पुनः ।
करिहस्तमिति प्रोक्तं नवकं करणोद्भवम् ।
अपसर्पितसंज्ञे स्यादङ्गहारे हरप्रिये ॥ २७
॥ इत्यपसर्पितः ॥ ४ ॥
*
नूपुरं चैव विक्षिप्तमलताक्षिप्तके ततः ।
उरोमण्डलकं चैव नितम्बं करिहस्तकम् ॥ २८
करणैरष्टभिः प्रोक्तो बुधैराक्षिप्तिकोऽत्र च ।
विक्षिप्तालातकाक्षिप्तान्यत्र केचिद् द्विरभ्यधुः ॥ २९
॥ इत्याक्षिप्तिकः ॥ ५ ॥
*
कृत्वा समनखं छिन्नं संभ्रान्तं दक्षिणाङ्गतः ।
वामतो भ्रमरे चार्धसूच्यतिक्रान्तमेव च ॥ ३०
भुजङ्गत्रासितं पश्चात् करिहस्तं क्रमादिति ।
नवभिः करणैः प्रोक्तः परिच्छिन्नोऽङ्गहारकः ॥ ३१
॥ इति परिच्छिन्नः ॥ ६ ॥
*
अङ्गद्वयेन वैशाखरेचितं चाथ नूपुरम् ।
भुजङ्गत्रासितोन्मत्ते मण्डलस्वस्तिके ततः ॥ ३२
निकुट्टमूरूद्वृत्तं चाक्षिप्तोरोमण्डले तथा ।
करिहस्तं क्रमादेतैरेकादशभिरुच्यते ।
वैशाखरेचितो नाम विशाखे[1] पितृसेविना ॥ ३३
॥ इति वि( ?वै )शाखा( ?ख )रेचितः ॥ ७ ॥
*

1 The reading may be विशाखेऽपि नृसेदिना । The meaning in both the cases is not clear.

दिक्स्वस्तिकं विधायैकेनाङ्गेनार्धनिकुट्टकम् ।
पुनर्दिक्स्वस्तिकं कृत्वाऽन्याङ्गेनार्धनिकुट्टकम् ॥ ३४
अपविद्धमूरूद्वृत्तं चाक्षिप्तं च नितम्बकम् ।
करिहस्तमिति प्रोक्तो दशभिः करणैरयम् ।
पार्श्वस्वस्तिकसंज्ञोऽयमङ्गहारो हरार्चने ॥ ३५

॥ इति पार्श्वस्वस्तिकः ॥ ८ ॥

*

अर्धसूच्यथ विक्षिप्तमावर्तं च निकुट्टकम् ।
अथोरूद्वृत्तमाक्षिप्तमुरोमण्डलकं ततः ।
करिहस्ते तथा सूचीविद्धोऽभून्नवभिः स्फुटः ॥ ३६

॥ इति सूचीविद्धः ॥ ९ ॥

*

अपराजितसंज्ञे स्याद् दण्डपादं ततः परम् ।
व्यंसितं प्रसर्पितं च निकुट्टार्धनिकुट्टके ॥ ३७
आक्षिप्तोरोमण्डले च करिहस्तमितीरितैः ।
नवभिर्लक्षणं प्रोक्तं मुनभिर्भरतादिभिः ॥ ३८

॥ इत्यपराजितः ॥ १० ॥

*

बहुशश्चित्रगुम्फानि मदस्खलितकं तथा ।
मतल्लिकरणं चैव तलसंस्फोटितं तथा ॥ ३९
कृत्वैतानि निकुट्टं चोरूद्वृत्तं करिहस्तकम् ।
आद्यत्रिकद्विरभ्यासादस्मिन् तानि तथा दश ॥ ४०
चतुःपञ्चादिकान् केचित् त्रिकेऽभ्यासान् विदुर्बुधाः ।
मदाद्विलसिते तच्च लक्षणस्थं मयोदितम् ॥ ४१

॥ इति मदविलसितः ॥ ११ ॥

*

दक्षिणाङ्गेन रचयेद् भ्रमरं नूपुरं तथा ।
भुजङ्गत्रासितं चैव ततो वाम(?मे)न चैव हि ॥ ४२
वैशाखरेचिताक्षिप्तच्छिन्नानि भ्रमरं तथा ।
उरोमण्डलसंज्ञं च नितम्बं करिहस्तकम् ।
एकादशभिरेव स्यान्मत्ताक्रीडोऽङ्गहारकः ॥ ४३

॥ इति मत्ताक्रीडः ॥ १२ ॥

*

वामतो व्यंसितं कुर्यान्निकुट्टं चतुरं ततः ।

द्वि[:] कृत्वालातकाक्षिप्ते उरोमण्डलकं तथा।
अष्टभिः करणैरत्रालीढः सकरिहस्तकैः॥ ४४
॥ इत्यालीढः ॥ १३ ॥

*

नूपुरं भ्रमरं कृत्वा व्यंसितालातके तथा।
नितम्बसूचिसंज्ञं वाच्छुरिते कर(?रि)हस्तकम्।
अष्टभिः करणैरस्मिन् लक्ष्म प्रोक्तं मनीषिभिः॥ ४५
॥ इत्याच्छुरितः ॥ १४ ॥

*

पार्श्वच्छेदे च करणं कुर्याद्वृश्चिककुट्टितम्।
ऊर्ध्वजानु तथाक्षिप्तं स्वस्तिकं च ततः परम्॥ ४६
परिवर्त्य त्रिकं चोरोमण्डलं च नितम्बकम्।
करिहस्तेन सहितं करणाष्टकमीरितम्॥ ४७
॥ इति पार्श्वच्छेदः ॥ १५ ॥

*

अर्धसूचि तु वामाङ्गे विद्युद्भ्रान्तं च दक्षिणे।
पुनरंसे विपर्यासाद् द्वयं छिन्नं ततः परम्॥ ४८
अतिक्रान्तं वामतोऽथ लतावृश्चिकसंज्ञकम्।
अष्टभिः करणैरेष विद्युद्भ्रान्तः प्रकीर्तितः॥ ४९
॥ इति विद्युद्भ्रान्तः ॥ १६ ॥
॥ इति चतुरस्रमानेन षोडशाङ्गहाराः ॥

*

## [ त्र्यस्रमानेनाङ्गहाराः । ]

अथ त्र्यस्रेण मानेन षोडशान्यान् प्रचक्ष्महे।
निकुट्टार्धनिकुट्टे च भुजङ्गत्रासितं तथा॥ ५०
ततोऽपि करणं कार्यं भुजङ्गत्रस्तरेचितम्।
आक्षिप्तोरोमण्डले च क्रमात् कृत्वा लताकरम्।
विष्कुम्भापसृते ज्ञेयं करणानां तु सप्तकम्॥ ५१
॥ इति विष्कुम्भापसृतः ॥ १ ॥

*

मतल्लि गण्डसूचि स्याल्लीनं चाप्यपविद्धकम्।
चत्वारि द्रुतमानेन तलसंस्फोटितं ततः।
करिहस्तं च सप्त स्युर्मत्तस्खलितसंज्ञके॥ ५२
॥ इति मत्तस्खलितः ॥ २ ॥

*

[1]मण्डलस्वस्तिकं [छिन्नं] निवेशा(?शो)न्मत्तके ततः ।
उद्धट्टितं मतल्लिः स्यादाक्षिप्तमतः परम् ।
उरोमण्डलकं [2]चाष्टगतिमण्डलसंज्ञके ॥ ६३

॥ इति गतिमण्डलः ॥ ३ ॥

*

अपविद्धे कटिच्छिन्नं सूचीविद्धमथो करौ[3] ।
उद्वेष्टितौ[4] ततश्चारी बद्धा च वलितं[5] त्रिकम् ॥ ६४
ऊरूद्वृत्तं च करणमुरोमण्डलकं तथा ।
पञ्चैव करणानि स्युरन्तिमेन सहात्र तु ॥ ६५

॥ इत्यपविद्धः ॥ ४ ॥

*

विष्कुम्भे नवकं ज्ञेयं निकुट्टं [च] निकुञ्चितम् ।
अञ्चितं च क्रमादूरू[6]द्वृत्तमर्धनिकुट्टकम् ॥ ६६
भुजङ्गत्रासितं कार्यौ हस्तावुद्वेष्टितौ ततः ।
भ्रमरं करिहस्तं चेत्येभिर्लक्षणगैः क्रमात् ॥ ६७

॥ इति विष्कुम्भः ॥ ५ ॥

*

पञ्चैवोद्धट्टिते तानि निकुट्टाख्यमतः परम् ।
स्यादुरोमण्डलं चैव नितम्बं करिहस्तकम् ॥ ६८

॥ इत्युद्धट्टितः ॥ ६ ॥

*

आक्षिप्तरेचिते कार्यमाद्यं[7] स्वस्तिकरेचितम् ।
पृष्ठस्वस्तिकसंज्ञं तु दिक्स्वस्तिकमतः परम् ॥ ६९
कटीसमं चूर्णितं च भ्रमरं च ततः परम् ।
स्याद्वृश्चिकरेचितं च ततः पार्श्वनिकुट्टकम् ॥ ७०
उरोमण्डलसंज्ञं च संनतं च ततः परम् ।
सिंहाकर्षितकं नागापसर्पितसमाह्वयम् ॥ ७१
अत्र वक्षःस्वस्तिकं च वैकल्पिकमुदीरितम् ।
दण्डपक्षं च करणं ललाटतिलकं ततः ॥ ७२

---

1 मण्डलस्वस्तिकादूर्ध्वं निवेशोन्मत्तसंज्ञिके । उद्धट्टिताख्यं मत्तल्लिः स्यादाक्षिप्तमतः परम् ॥ उरोमण्डलकं छिन्नं कट्यादिगतिमण्डले । इत्यष्टौ करणानि स्युरिति निःशङ्कभाषितम् ॥ सं. र. अ. ७ श्लो. ८४३-४४. 2 ABC चाथ । 3 C करो । 4 C उद्वेष्टितो । 5 AB ललितं । 6 ABC °रूद्वृत्तं । 7 BC चार्य° ।

षोडशं करणं ज्ञेयमथो तलविलासितम् ।
निशुम्भितं विद्युद्भ्रान्तं गजक्रीडितकं ततः ॥ ६३
नितम्बविष्णुक्रान्ताख्योरूद्वृत्ताक्षिप्तकानि च ।
उरोमण्डलसंज्ञं तु नितम्बं करिहस्तकम् ॥ ६४
कटीछिन्नमिति प्राहुः सप्तविंशतिरत्र वै ।
वैकल्पितं कटीछिन्नं केचिदाक्षिप्तरेचितम् ॥ ६५
इच्छन्ति तन्मतेऽत्र स्युर्विंशतिः पञ्च चैव हि ।
नितम्बोरोमण्डलयोरावृत्तिं ये च मन्वते ॥ ६६
करणानि मते तेषामत्र स्युः सप्तविंशतिः ।
ये वक्षःस्वस्तिकं चात्र कटीछिन्नं च नो जगुः ।
पञ्चविंशतिरेव स्युस्तदा वृत्त्यापि तन्मते ॥ ६७

॥ इत्याक्षिप्तरेचितः ॥ ७ ॥

*

रेचिते करणं पूर्वं कुर्यात् स्वस्तिकरेचितम् ।
अर्धरेचितकं पश्चाद्वक्षःस्वस्तिकमेव च ॥ ६८
उन्मत्तसंज्ञकं पश्चात् कुर्यादाक्षिप्तरेचितम् ।
अर्धमत्तल्लिकरणं स्याद्रेचकनिकुट्टकम् ॥ ६९
विधायैतानि कार्यं च भुजङ्गत्रस्तरेचितम् ।
नूपुरं करणं कृत्वा कार्यं वैशाखरेचितम् ॥ ७०
भुजङ्गाञ्चितकं दण्डरेचितं चक्रमण्डलम् ।
वृश्चिकं रेचितं कृत्वा कुर्याद् व्यंसितमेव च ॥ ७१
विवृत्तं विनिवृत्तं च वर्तितं गरुडप्लुतम् ।
मयूरललितं चैव सर्पितं स्खलिताभिधम् ॥ ७२
प्रसर्पितं च करणं तलसंघट्टितं तथा ।
वृषभक्रीडितं कुर्याल्लोलितं च ततः परम् ॥ ७३
षड्विंशतिरितीमानि परिवृत्तिप्रकारतः ।
विधाय विषमैर्भागै[ः][1] पर्यायाद्दिक्चतुष्टये ।
उरोमण्डलकाद्यं च ततः कुर्याद् द्विकं सुधीः ॥ ७४

॥ इति रेचितः ॥ ८ ॥

*

नूपुरं च विवृत्तं च निकुट्टार्धनिकुट्टके ।
अर्धरेचितकं पश्चात् स्याद्रेचकनिकुट्टकम् ॥ ७५

1 ० भागे ।

ललिताख्यं च वैशाखरेचितं चतुरं ततः ।
दण्डरेचितकं पश्चात् कार्यं वृश्चिककुट्टितम् ॥ ७६
पार्श्वनिकुट्टकं पश्चात् संभ्रान्तोद्घट्टितेऽपि च ।
उरोमण्डलकं पश्चात् करिहस्तं सहान्तिमम् ॥ ७७
एवमर्धनिकुट्टे स्युर्दश सप्त च संख्यया ।

॥ इति अर्धनिकुट्टकः ॥ ९ ॥

*

वृश्चिकापसृते कार्यं लतावृश्चिकमादितः ॥ ७८
निकुञ्चितं मतल्लिः स्यान्नितम्बं करिहस्तकम् ।
षडेतानि महान्त्येव नितम्बखला(?स्था)नके परे ॥ ७९
इच्छन्ति भ्रमरं तानि तन्मतेऽपि षडेव हि ।

॥ इति वृश्चिकापसृतः ॥ १० ॥

*

स्वस्तिकं व्यंसितं तु द्विरलाताख्योर्ध्वजानुनी ॥ ८०
निकुञ्चितार्धसूच्याख्यविक्षिप्तोद्वृत्तकान्यथ ।
आक्षिप्तं करिहस्तं चैकादश स्युरलातके ॥ ८१
व्यंसितं द्विः प्रयुज्येत तदैकमधिकं भवेत् ।

॥ इत्यलातकः ॥ ११ ॥

*

परावृत्ते दक्षिणाङ्गे जनितं शकटास्यकम् ॥ ८२
अलातं भ्रमरं चाथ गण्डे करनिकुट्टकम् ।
करिहस्तं क्रमात् षट्कं करणानामिहेरितम् ॥ ८३
निकुट्टनमिहाङ्गस्य नमनोन्नमनं मतम् ।

॥ इति परावृत्तः ॥ १२ ॥

*

परिवृत्तेऽङ्गहारे तु नितम्बं करणं ततः ॥ ८४
करणानुक्रमणे चैव कुर्यात् स्वस्तिकरेचितम् ।
विक्षिप्ताक्षिप्तकमथो लता वृश्चिकमेव च ॥ ८५
उन्मत्तं करिहस्तं च भुजङ्गत्रासितं तथा ।
आक्षिप्तिकं[1] नितम्बं च नितम्बान्तान्यमून्यथ ॥ ८६
नवभ्रमरकाख्येन परिवृत्त्या समाचरेत् ।
दिगन्तरमुखस्थित्येत्यावर्त्यापरयोर्दिशोः ॥ ८७
करिहस्तकटीछिन्ने विदध्यादाद्यदिक्स्थितः ।

1 ABC °क्षिति° ।

अङ्गहारान्तरेष्वेव परिवर्त्य विधिस्त्वयम् ॥ ८८
मुक्त्वाऽन्त्यकरणद्वन्द्वं केचिदाद्यं विमुच्य च ।
आहुः पुरातनाचार्या भट्टाभिनवपूर्वकाः ॥ ८९
॥ इति परिवृत्य(?त्त)रेचितः ॥ १३ ॥

*

चतुरं करणं कृत्वा भुजङ्गाञ्चितकं ततः ।
गृध्रावलीनकं कार्यमङ्गद्वन्द्वे पृथक् ततः ॥ ९०
विक्षिप्ते करणे कार्ये उद्वृत्तं सूचिसंज्ञकम् ।
नितम्बं करणं पश्चाल्लतावृश्चिकमेव च ॥ ९१
नवभिः करणैः प्रोक्त उद्वृत्तः पूर्वसूरिभिः ।
विक्षिप्तोद्वृत्तके द्विश्चेदधिकं तद्द्वयं भवेत् ॥ ९२
॥ इत्युद्वृत्तः ॥ १४ ॥

*

विक्षिप्तमञ्चितं चैव गण्डसूचि ततः परम् ।
गङ्गावतरणं पश्चादर्धसूचि ततः परम् ॥ ९३
दण्डपादं च वामाङ्गे साधयेत्तदनन्तरम् ।
चतुरं भ्रमरं चाथ नूपुराक्षिप्तके तथा ॥ ९४
अर्धस्वस्तिकसंज्ञं च नितम्बं करिहस्तकम् ।
उरोमण्डलकं चैवेत्येवं पञ्चदशाब्रुवन् ॥ ९५
अङ्गहारे च संभ्रान्ते करणानि मनीषिणः ।
॥ इति संभ्रान्तः ॥ १५ ॥

*

वैशाखरेचितं चैव वृश्चिकं द्विः प्रयुज्य च ॥ ९६
निकुट्टकाभिधं कुर्यात्ततः कार्यौ लताकरौ ।
अन्तिमेन सहैतानि षट् स्युः स्वस्तिकरेचिते ॥ ९७
॥ इति स्वस्तिकरेचितः ॥ १६ ॥

*

कटिभ्रान्तमर्गलं च पार्श्वजानु तथैव च ।
हरिणप्लुतकं कार्यं ततः प्रेङ्खोलितं पुनः ॥ ९८
अवहित्थं चापस्रुतं छिन्नं च कटिपूर्वकम् ।
करणं नवमं कार्यं नवीनभरतोक्तितः ।
गोविन्दप्रियसंज्ञोऽयं कार्यो गोविन्दपूजने ॥ ९९
॥ इति गोविन्दप्रियः ॥ १७ ॥

*

करणं वलितोरुः स्याद्वलितं च ततः परम् ।
पादापविद्धं च ततो दोलापादां समाश्रयेत् ॥ १००
पार्श्वक्रान्तं परिवृत्तं सिंहविक्रीडितं ततः ।
एलकाक्रीडितं पश्चात् कटीछिन्नमतः परम् ॥ १०१
नवभिः करणैरेभिर्निर्मितः कुम्भभूभुजा ।
माधवप्रियसंज्ञोऽयं प्रयुक्तो माधवार्चने ॥ १०२

॥ इति माधवप्रियः ॥ १८ ॥
॥ इति त्र्यस्रमानेनाष्टादशाङ्गहाराः ॥

*

## [ अङ्गहारविधिः । ]

विनियोगोऽङ्गहाराणां पूर्वरङ्गाङ्गगो बुधैः ।
ज्ञातव्यो मुरजाद्यैश्च वाद्यैस्तालयानुगैः ॥ १०३
वर्धमानासारितेषु पाणिका गीतिकादिषु ।
उत्थापनादिषु प्रायः श्रेयः परमकाङ्क्षिभिः ॥ १०४
अङ्गहाराङ्गतायां[1] तु करणानामपीरितः ।
विनियोगः फलं वापि पृथक्त्वेन प्रयोगतः ॥ १०५

॥ इति द्वात्रिंशदङ्गहारलक्षणम् ॥ १ ॥

*

स्थिरहस्तो दानविधौ पर्यस्तश्चापसर्पितोऽरिजनः ।
आक्षिप्तो येन रणे विद्युद्भ्रातः परं षड्जः ॥ १०६

इति श्रीराजाधिराजश्रीकुम्भकर्णमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां नृत्यरत्नकोशे करणोल्लासे अङ्ग[हार]परीक्षणं तृतीयं[2] समाप्तम् ।

---o---

## तृतीयोल्लासे चतुर्थं परीक्षणम् ।

उद्वृत्तोऽपि न संभ्रान्तो विषयैर्योऽपराजितः ।
मत्ताक्रीडोऽपरिच्छिन्नप्रभावस्तं भजे शिवम् ॥ १

अथ भरतमुनीश्वराभिमत्या
निगदति रेचकलक्षणं नरेशः ।
करचरणकटीषु कण्ठदेशे
पुनरुदिता तदवस्थितिर्मुनीन्द्रैः ॥ २

---

1 c अंगहारान् गतानां तु । नृ. र. को. in भ. को. पृ. ७ । 2 BC drop तृतीयं ।

यदपि च गदितोऽङ्गहारमध्ये
मुनिविभुना ननु रेचकः समस्तः ।
तदपि च पृथगुच्यते यतोऽयं
फलजनने गदितः पृथक् समर्थः ॥ ३

*

[ रेचकलक्षणम् । ]

स भवति कररेचकः क्रमाद् या
भ्रमणततिः परितोऽति तूर्णजाता ।
विरचितवरहंस[हंस][1]पक्षा-
कृतित इति प्रचुरोपनृत्यकर्त्री ॥ ४

॥ इति कररेचकः ॥ १ ॥

*

स भवति चरणोद्भवः प्रयत्ना-
न्नमनमथोन्नमनं झटित्युपेतः ।
अतिचलचरणाग्रदेशभूतो
य इह चलाचलपार्ष्णिभागजातः ॥ ५

॥ इति चरणरेचकः ॥ २ ॥

*

भ्रमणमिह करोति सर्वदिक्षु
यदिह कटी कटिरेचकं[2] तमाहुः ।

॥ इति कटिरेचकः ॥ ३ ॥

*

प्रसृत[3]विरलिताङ्गुलेस्तिरश्चा-
भ्रमणलयेन गलस्य याति शीघ्रा ॥ ६
गलगतविधुतभ्रमिः प्रदिष्टो
मुनिविभुना किल कण्ठरेचकोऽयम् ।

॥ इति कण्ठरेचकः ॥ ४ ॥

*

इति समुदितरेचकैश्च नृत्यं
भवति मनोहरणं मुनीश्वराणाम् ॥ ७

॥ इति रेचकलक्षणम् ॥

*

---

1 ABC वरहंसपक्षाकृति । In भ. को. पृ. ८१३ विरचितवरहंसहंसपक्षाकृति° ।
2 ABC °रेचितः । 3 B प्रसृति ।

यः शतैर्धैर्यगांभीर्यैर्न केनाप्यति रे(?रि)च्यते ।
तेन श्री कुम्भकर्णेन कृतं रेचक[ल]क्षणम् ॥

इति सरस्वतीरससमुद्भूतकैरवोद्याननायकेन अभिनवभरताचार्येण मालवाम्भोधिमाथमन्थमहीधरेण योगिनीप्रसादासादितयोगिनीपुरेण मण्डलदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण अजयमेरुजयाजेयविभवेन यवनकुलाकालकालरात्रिरूपेण शाकंभरीरमणपरिशीलनपरिप्राप्तशाकंभरीतोषितशाकंभरीप्रमुखशक्तित्रयेण नागपुरोद्धूलनप्रचण्डपवनेन अर्बुदाचलग्रहणसंदर्शिताचलाद्भुतप्रतापेण गूर्जराधीशधीरत्वोन्मूलनप्रचण्डपवनेन श्रीमत्कुम्भलमेरुनवीननिर्मितसुमेरुणा श्रीचित्रकूटभौमस्वर्गतातन्वीकरणचारुतरपथेन मेदपाटसमुद्रसंभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन प्ररूढपत्रयवनदवदहनदवानलेन प्रत्यर्थिपृथिवीपतितिमिरततिनिराकरणप्रौढप्रतापमार्तण्डेन वैरिवनितावैधव्यदीक्षादानदक्षोद्दण्डकोदण्डमण्डिताखण्डभुजादण्डेन भूमण्डलाखण्डलेन श्रीचित्रकूटविभुना अध्युष्टतमनरेश्वरेण गजनरतुरगाधीशराजत्रितयतोडरमल्लेन वेदमार्गस्थापनचतुराननेन याचककल्पनाकल्पतरुणा वसुन्धरोद्धरणादिवराहेण परमभागवतेन जगदीश्वरीचरणकिङ्करेण भवानीपतिप्रसादाप्ताप (? प्तप्र) सादवरप्रसादेन राजगुर्वादिबिरुदावलीविराजमानेन राजाधिराजमहाराणा-श्रीमोकलेन्द्रनन्दनेन राजाधिराजश्रीकुम्भकर्णमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रत्नकोशे करणोल्लासे रेचकपरीक्षणं चतुर्थं समाप्तम् ॥

॥ उल्लासश्च समाप्तिं समगादिति विततमतीनामभिमतसिद्धिरस्तु ॥[1]

---

[[1] C यश्शौर्यवीर्यगांभीर्यै न(?र्न) केनाप्यतिरिच्यते ।
तेन श्रीकालसेनेन कृतं रेचकलक्षणम् ॥

इति श्रीजगदीशवनदेवनिजगणेन ॥ १ ॥ जगदीश्वरी-कामेश्वरीचरणकिङ्करेण ॥ २ ॥ श्रीब्रह्माद्रिविभुना ॥ ३ ॥ अध्युष्टतमनरेश्वरेण ॥ ४ ॥ श्रीभीष्मपुरजयानीतानेकराजकन्यारत्नेन ॥ ५ ॥ श्रीपुरग्रहणसंवर्द्धितयशोभरेण ॥ ६ ॥ वाटिकाचलग्रहणजनितकीर्त्तिपूरपराजिताचलनायकेन ॥ ७ ॥ संगमनीरदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण ॥ ८ ॥ दमनपुरविध्वंसनबंदीकृतयवनीनिचयेन ॥ ९ ॥ महिषमेरुजयाजेयविभवेन ॥ १० ॥ शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण ॥ ११ ॥ अष्टादशगिरिविजयविख्यातवीर्यगर्वेण ॥ १२ ॥ महदंबमातृकापूरोद्धूलनधर्षिता-(? त) महोरगपुरेण ॥ १३ ॥ वनदेवस्वामिप्र(?प्रा)सादरचनापरपरमेश्वरेण ॥ १४ ॥ त्र्यंबकेश्वरसन्निधिकीर्त्तिस्तंभोन्नतजयस्तंभेन ॥ १५ ॥ श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचितचारुपथेन ॥ १६ ॥ श्रीकामक्षागिरिनवीननिर्मितिपराजितसुमेरुणा ॥ १७ ॥ श्रीमहिषाचलोपरिश्रीहरिशरणरचिताचलदुर्गेण ॥ १८ ॥ अभिनवभरताचार्येण ॥ १९ ॥ वीणावादनप्रवीणेन ॥ २० ॥ यवनकुलाकालकालरात्रिरूपेण ॥ २१ ॥ त्रिसंध्यक्षेत्रसमुद्र-

संभवरोहिणीरमणेन ॥ २२ ॥ परमभागवतेन ॥ २३ ॥ श्रीमहाराजाधिराजमहाराणा श्रीतामराजेन्द्रनन्दनेन ॥२४॥ महाराज्ञीश्रीसौभाग्यवतीजसमांबिकाहृदयनन्दनेन ॥२५॥ सकलसीमंतिनीशिरोमणिनिकुंभराजन्यवंशावतंसमहाराज्ञीश्रीकर्मवतीलषुमादेवीहृदयाधिनाथेन ॥ २६ ॥ महाराजाधिराजकालसेनमहीन्द्रेण विरचिते सङ्गीतराजे षोडशसाहस्र्यां सङ्गीतमीमांसायां नृत्यरत्नकोशे करणोल्लासे रेचकपरीक्षणं चतुर्थं समाप्तम् ॥

॥ उल्लासश्च तृतीयः समाप्तिं समगादिति विततमतीनामभिमतसिद्धिरस्तु ॥ ]

---

## चतुर्थोल्लासे प्रथमं परीक्षणम् ।

[1]ऋग्वेदादितनोर्यस्माद्भारत्या[2]द्यास्तु वृत्तयः ।
जज्ञिरे तमहं वन्दे वाचो[3]वृत्तिप्रकाशकम्[4] ॥ १
वृत्तयश्च कलासाश्चोपाध्यायाचार्यलक्षणम् ।
[5]नटनर्तकयोर्वैतालिकचारणलक्षणम् ॥ २
परीक्षणे वार्तिके[6]षु क्रमादेतन्निरूप्यते ।
वृत्तीनां लक्षणं [7]पूर्वं सामान्येन प्रदर्शितम् ॥ ३
विशेषलक्षणं तासामथ ब्रूमः समासतः ।
एकार्णवे पुरा विश्वे शेषशायिनि माधवे ॥ ४
मद[8]वीर्यबलोन्मत्तावसुरौ मधुकैटभौ ।
बहुभिः परुषैर्वाक्यैर्जानुभिर्मुष्टिभिस्तथा ॥ ५
तर्जयामासतुर्देवं क्षोभयन्ताविवार्णवम् ।
तौ दृष्ट्वा द्रुहिणो भीतो[9] मुरारिं वाक्यमब्रवीत् ॥ ६

*

## [ भारती । ]

भारतीं[10] सृज देवेश नयेमौ निधनं यतः[11] ।
ततः शुद्धैरविकृतैः[12] साङ्गहारस्तदाङ्गकैः ॥ ७
युयुधे भगवान् ताभ्यां युद्धमार्गविशारदः ।
पादन्यासैस्तदायत्तैरतिभारोऽभवद्भुवः[12] ॥ ८
तत्रेयं भारती वृत्तिर्निर्मिता लोकभाविना ।
तीव्रैर्दीप्तिकरैः शार्ङ्गधनुषो वलितैरथ ॥ ९

---

1 C ऋग्वेदितनो । 2 AB भारताद्या° । 3 C वाच्ये । 4 C °प्रकाशके । 5 C नटनर्तकयोश्चैव लक्ष्म वैतालीकस्य च । 6 AB °केत्र कस्मादे° । 7 C पूर्वे । 8 C मदो° । 9 AB °तोसुरारि, C °तोऽसु° । 10 ABC °तीसृ° । 11 AB यत । 12 C drops from तैः to भुवः ।

सात्त्वती निर्मिता वृत्तिरिति सत्त्वैरसंभ्रमैः ।
लीलाभावैरङ्गहारैर्विचित्रैः सुकुमारकैः ॥ १०
यद्बन्ध शिखापाशं तत्र जाता तु कैशिकी ।
विचित्रैर्युद्धकरणैर्नानाचारीसमुद्भवैः ॥ ११
संरम्भावेगबहुला संजाताऽऽरभटी तदा ।
एवं तदा हतौ दृष्ट्वा दानवौ द्रुहिणोऽब्रवीत् ॥ १२
न्यायसंज्ञा भविष्यन्ति शस्त्रमोक्षे सदा इमाः ।
ऋषिभिस्तास्तथा दृष्ट्वा कृताः पाठ्या(?व्या)भिसंयुताः ॥ १३
नाट्यवेदसमुत्पन्ना वागङ्गाभिनयात्मिकाः ।
भारत्या अभवन् भेदाश्चत्वारोऽङ्गत्वमागताः ॥ १४
प्ररोचनाऽऽमुखं चैव वीथी प्रहसनं तथा ।
तत्र प्ररोचना पूर्वरङ्गे पापप्रनाशिनी ॥ १५
जयाभ्युदयमाङ्गल्या विघ्नप्रध्वंसकारिणी ।

॥ इति प्ररोचना ॥ १ ॥

*

प[ा]रिपार्श्वादिका यत्र सूत्रधारेण कुर्वते ॥ १६
[1]आमुखं तत्र विज्ञेयं बुधैः प्रस्तावनाभिधम् ।
उद्घाटकः कथोद्धातः प्रयोगातिशयस्तथा ॥ १७
प्रवृत्तिकावगलि(?लगि)ते आमुखाङ्गानि पञ्च वै ।

॥ इत्यामुखम् ॥ २ ॥

*

वीथी प्रहसनं चैव दशरूपकगोचरे ॥ १८

॥ इति वीथीप्रहसने ॥ ३ ॥

॥ इति भारती[2] ॥

*

## [ सात्त्वती । ]

तत्र सत्त्वगुणोत्कर्षा हर्षशौर्यगुणोत्तराः ।
त्यागशौर्यविशोकाद्या वृत्तिः स्यात् सात्त्वती शुभा ॥ १९
उत्थापकपरिवर्तकसंलापसंघात्यनामधेयाश्च ।
चत्वारः स्युर्भेदाः सात्त्वत्या मुनिवरेणोक्ताः ॥ २०
उत्थापनस्तु संहर्षो,

॥ इत्युत्थापकः ॥ १ ॥

*

1 A line seems to be missing here or the reading may be: **संलापमामुखं ज्ञेयं** । cf. ना. शा. अ. २०. श्लो. ३०–३३. (G. O. C.). 2 ABC put the verse after **इति भारती.**

अन्ययोगः परिवर्तिकः ।
आरब्धार्थपरित्यागात्,

॥ इति परिवर्तकः ॥ २ ॥

*

संलापः प्रोच्यतेऽधुना ॥ २१
साधिक्षेपवचोभङ्गी,

॥ इति संलापकः ॥ ३ ॥

*

स तु संघात्यको मतः ।
आत्मनो दोषयोगाद्यैः संघाते भेदकृद्वचः ॥ २२

॥ इति संघात्यकः ॥ ४ ॥

॥ इति सात्त्वती ॥

*

[ कैशिकी । ]

कामोपभोगप्रचुरा श्लक्ष्णनेपथ्यशालिनी ।
विचित्रनृत्यगीताद्या कैशिकी वृत्तिरिष्यते ॥ २३
नर्मस्फोटो नर्मगर्भो नर्मस्पुञ्जोऽथ नर्म च ।
कैशिकीसंभवा भेदाश्चत्वारः परिकीर्तिताः ॥ २४
नानाभावरसैर्युक्तः समग्ररसपेशलः ।
[1]नर्मस्फोटश्च विज्ञेयो विशेषबहुताकुलः ॥ २५

॥ इति नर्मस्फोटः ॥ १ ॥

*

नायको यत्र कार्यार्थवशाद्गुप्तैर्गुणैरिह ।
नर्मगर्भो भवेदेष रूपसंभावनादिभिः ॥ २६

॥ इति नर्मगर्भः ॥ २ ॥

*

नवसंगमसंभोगरतिरागसमुद्भवैः ।
नर्मस्पुञ्जो भवेदत्रावसानभयसंमुखः ॥ २७

॥ इति नर्मस्पुञ्जः ॥ ३ ॥

*

शृङ्गारास्थापकं हास्यं बहुलं करणाश्रितम् ।
आत्मोपक्षेपकं नर्म विप्रलम्भरसोज्ज्वलम् ॥ २८

॥ इति नर्म ॥ ४ ॥

॥ इति कैशिकी ॥

*

1 ABC मर्म° ।

[ आरभटी । ]

मायेन्द्रजालबहुला चित्रयुद्धनियन्त्रिता ।
विज्ञेयाऽऽरभटी वृत्तिः कपटैर्बहुभिवृ(?र्वृ)ता ॥ २९
वस्तूत्थापनसंफेटौ संक्षिप्तकावपातकौ ।
एते भेदास्तु चत्वार आरभट्याः प्रकीर्तिताः ॥ ३०
कार्यं विभाव्यते यत्र सविद्रवमविद्रवम् ।
अनेकरससंयुक्तं तद्वस्तूत्थापनं मतम् ॥ ३१

॥ इति वस्तूत्थापनम् ॥ १ ॥

*

शस्त्रप्रहारबहुलो युद्धसंरम्भसंकुलः ।
संफेटो नाम विज्ञेयो निर्भेदकपटाकुलः ॥ ३२

॥ इति संफेटकः ॥ २ ॥

*

अन्वर्थक(?शि)ल्पसंयुक्तो बहुसुस्तपवोयु(?पुस्तोपयोग)तः ।
संक्षिप्तवस्तुविषयो ज्ञेयः संक्षिप्तको बुधैः ॥ ३३

॥ इति संक्षिप्तः ॥ ३ ॥

*

भयहर्षसमुत्थानां[1] विनिपातससंभ्रमः ।
प्रवेशनिर्गमाद्युक्तः सोऽवपात इति स्मृतः ॥ ३४

॥ इत्यवपातः ॥ ४ ॥

॥ इत्यारभटी ॥

*

एताः प्रोक्ताश्चतस्रस्तु वृत्तयः काव्यसंश्रयाः ।
युद्धे नियु(ब?)द्धे काव्ये ता उपयोगं व्रजन्ति वै ॥ ३५
वृत्तिर्वापि रसो वापि भावो वापि प्रयोगतः ।
पुष्पावकीर्णाः कर्तव्याश्चित्रमाल्यानुकारिणः[2] ॥ ३६

॥ इति चतस्रो वृत्तयः ॥

*

[ अथ कलासा लक्ष्यन्ते । ]

यद्यपि भेदा लोके भूयांसः करणमार्गगास्तदपि ।
तानिह विमुच्य यत्नात् कलासकरणानि वक्ष्यन्ते ॥ ३७
विद्युत्खड्गौ मृगबल(?क)संज्ञौ प्लवसंज्ञमपरमपि द्वितयम् ।
एते हि षट् प्रभेदाः पृथग्विभिन्नाः कलासकरणस्य ॥ ३८

1 नाशा° समुत्थानं ( अ. २०, श्लो. ६९. G. O. S. ) 2 ABC कारिणैः ।

विद्युत्खड्गौ द्रुततो गुरुणा द्वौ मृगबकौ च मण्डूकः ।
लघुना द्रुतेन हंसः परिमीयन्ते क्रमात् षडमी ॥ ३९
विद्युत्कलास इष्टः षोढा खड्गश्चतुर्विधः कृतिभिः ।
एको मृगककलासो बकसंज्ञः स्याच्चतुर्धाऽत्र ॥ ४०
दर्दुरकोऽपि चतुर्धा हंसकलासस्तु त्रिधा ज्ञेयः ।
एवं द्वाविंशतिधा कलासभेदाः समासेन ॥ ४१

*

## [ विद्युत्कलासाः । ]

वर्षासु जलदराजिषु सचमत्कारं यथाऽचिरविलासा ।
विलसति तथा पताकप्रमुखाः द्रुतमानतस्तिर्यक् ॥ ४२
यस्मिन्नूर्ध्वमधोऽधः प्रकाशमायान्ति हस्तकाः सततम् ।
विद्युदिव चञ्चलस्तं वदन्ति विद्युत्कलासमिह ॥ ४३
पताकं वामहस्तं तु नत्वा दक्षिणकर्णगम् ।
दक्षं पुनः कटीं वामां वामजङ्घां तथाविधम् ॥ ४४
एतद्विपर्ययाद्धस्तद्वन्द्वं कृत्वा ततो नु च ।
मुखसन्मुखमानेयमित्याद्यो भेद इष्यते ॥ ४५

॥ इति प्रथमः ॥ १ ॥

*

अर्धचन्द्रं करं कृत्वा दक्षिणं तं स्वसंमुखम् ।
आनीय कार्मुकाकारं जानु कुर्याद् द्वितीयके ॥ ४६

॥ इति द्वितीयः ॥ २ ॥

*

अञ्जलिं हस्तमाधाय समदृष्टिस्तदङ्गुली ।
प्रसार्य शिखरं कृत्वाऽग्रे भुजौ सारयेत्परे ॥ ४७

॥ इति तृतीयः ॥ ३ ॥

*

केशबन्धौ करौ कृत्वाऽलिके सव्येतरं करम् ।
वामं कृत्वा मूर्ध्नि कुर्यात् पताकौ च चतुर्थके ॥ ४८

॥ इति चतुर्थकः ॥ ४ ॥

*

हस्तं पुष्पपुटं कृत्वा विलोक्य च ततः पुनः ।
कृत्वोत्सङ्गं स्पृशेत् पश्चाद् दक्षिणं चरणं नटः ॥ ४९
हस्तेन दक्षिणेन प्राग्वामाङ्घ्रि वामकेन तु ।
इति पञ्चमभेदोऽयं सम्यगत्र प्रदर्शितः ॥ ५०

॥ इति पञ्चमः ॥ ५ ॥

*

अधो मकरमाधाय हस्ताभ्यां यत्र नृत्यति ।
सप्लुतैश्चरणन्यासैर्भेदः षष्ठोऽयमीरितः ॥ ६१

॥ इति षष्ठः ॥ ६ ॥

॥ इति विद्युद्वि(?त् क)लासस्य षड्भेदाः ॥

*

## [ खड्गकलासाः । ]

चकितेव निरीक्षन्ती पश्चाद्वामेतरं मुहुः ।
प्रचारं धृतखड्गे[1]व तन्वन्ती विविधं द्रुतम् ॥ ६२
प्लुतमानादसंबाधं विदधाति करानपि ।
यत्रार्धचन्द्रप्रभृतीन् स खड्गा[2]ख्यः कलासकः ।
कट्यां वामं विधायाथ सखड्गं[3] दक्षिणं करम् ॥ ६३

[ ॥ १ ॥ ]

*

कृत्वार्धचन्द्रमास्ते चेत् सकम्पं भेद आदिमः ।
ऊर्ध्वं कपोतमाधायाधस्तान्मुष्टिकरं तथा ।
पताकं तिर्यगाधाय ततः खड्गं[4]भिदाऽपरा ॥ ६४

[ ॥ २ ॥ ]

*

त्रिपताकौ करौ कृत्वा पश्च(?श्चाद्) यश्चरणः स तम् ।
घातयन्निव योऽग्रे चेद् योजयेदिति तत्परः ॥ ६५

[ ॥ ३ ॥ ]

*

स्वस्तिकं कर्कटं चैव मुष्टिकं च पताककम् ।
चतुरः क्रमतः कुर्यात् करान् यत्र तु नर्तकी ।
धृतौ मोहे तथा घाते पाते स स्याच्चतुर्थकः ॥ ६६

[ ॥ ४ ॥ ]

*

घातस्तत्र चतुर्धा स्यादूर्ध्वाधः पार्श्वयोर्द्वयोः ।
खड्गपूर्वकलासस्य भेदा एते चतुर्विधाः ॥ ६७

॥ इति खड्गकलासचतुष्टयम् ॥

*

## [ मृगकलासः । ]

पादाङ्गुलीभिराक्रम्य भूमिमुत्थाय जानुनी ।
मुहुरापातयेद्यत्र मृगशीर्षकराश्रिता ॥ ६८

---

1 ABC षड्जे । 2 ABC षड्गा । 3 ABC खड्ग । 4 ABC खड्गा ।

गर्भखिन्ना मृगीवेयं लास्याङ्गैर्नृत्यतत्परा ।
हरिणप्लुतया चार्यां गुरुमानेन चेत्ततः ।
त्रिविधां प्लुतिमाधत्ते तदा मृगवि(?क)लासकः ॥ ५९

॥ इति मृगवि(?क)लासः ॥

*

[ बककलासाः । ]

पार्श्वे विधुन्वती यत्र बकवत् सजलौ छदौ ।
कुर्वती हस्तकाँश्चैव संदंशमुकुलादिकान् ॥ ६०
आसनं च यथोत्थानं गुरुमानेन तन्वती ।
नरीनर्त्ति नटी यत्रानल्परूपविशेषवत् ॥ ६१
कलासो बकसंज्ञोऽयं विज्ञेयो नृत्यकोविदैः ।
विधाय भ्रमरीं काश्चित् संहतस्थानके स्थिता ॥ ६२
अलपल्लवसंज्ञौ च कृत्वारालौ करौ क्रमात् ।
यत्राङ्गी तत्र तौ नीत्वा युगपत् क्रमतोऽपि वा ॥ ६३
अङ्गं विधुन्वती चित्रं सवारि[1](?संचारि)गरुताविव ।
मत्स्यग्रहार्थं बकवत् कृत्वा मुकुलहस्तकम् ॥ ६४
मन्दं मन्दं पुरस्ताच्च पश्चाच्च प्रपदेन या ।
याति यस्मिन् कलासे सा विज्ञेया प्रथमा भिदा ॥ ६५

[ ॥ १ ॥ ]

*

त्रिपताकौ करौ कृत्वा विषमासनमास्थिता ।
मण्डिकौ चरणौ कृत्वा यथास्वं च पदे पदे ॥ ६६
नयन्ती हस्तकौ चित्रं संदंशमथ तन्वती ।
पश्यन्ती पार्श्वयोरग्रे चकितेव यदा नटी ।
कुरुते नृत्यमेषाऽसौ बकभेदो द्वितीयकः ॥ ६७

[ ॥ २ ॥ ]

*

सव्ये तदितरे भागे वामे वामेतरं यदि ।
आपातयेद् द्रुतं जानु सवेगं चरणौ भुवि ॥ ६८
निदधाति तदा प्रोक्ता मण्डिका नृत्यकोविदैः ।
मुकुलं हस्तकं कृत्वा शनैः पश्चाद् द्रुतं पुरः ॥ ६९
गच्छन्ती प्रस्खलन्त्येव पद्यत्यमु(?पतत्यनु)पदं यथा ।

---

1 C संसवा° ।

धृतमुक्ते बको मत्स्येऽनुपदं हस्तकानपि ॥ ७०
अलपद्ममरालं च मुकुलं चापि तन्वती ।
चित्रं नृत्यति यत्रैषा भेदः प्रोक्तस्तृतीयकः ॥ ७१

[ ॥ ३ ॥ ]

*

उत्तानवञ्चितौ हस्तौ यथा कृत्वार्द्धचन्द्रकम् ।
कट्यां निवेश्य हस्तं च प्रपदाभ्यामथारभेत् ॥ ७२
नानागतिविशेषांश्च धनुर्वत् पृष्ठतः पुरः ।
वक्राकृतिः पदाङ्गुष्ठपाणिसंस्पर्शलालसा ।
प्रनृत्यति यदा चित्रं भेदः प्रोक्तश्चतुर्थकः ॥ ७३

[ ॥ ४ ॥ ]

॥ इति बककलासचतुष्टयम् ॥

*

## [ मण्डूककलासाः । ]

त्रिपताकं करं कृत्वोत्प्लुत्योत्प्लुत्य समे पदे ।
सर्वतो दधती चित्रं विषमासनमास्थिता ॥ ७४
यत्र नृत्यति स प्रोक्तः कलासः प्लवसंज्ञकः ।
त्रिपताकौ पताकौ वा नाभौ कृत्वा करौ ततः ॥ ७५
प्रयाति पङ्क्त्यां पश्चाच्चेत्तालस्यानुगुणं यदा ।
तदायमाद्यभेदः स्यात्प्लवस्य मुनिसंमतः ॥ ७६

[ ॥ १ ॥ ]

*

त्रिपताकौ करौ कृत्वा वामपादं पुरःसरम् ।
हस्तं च वाममेवं स्याल्लघुमानेन वामतः ॥ ७७
गत्वा तत्रासनं कृत्वा समं विषममेव वा ।
ततः स्थानात् समुत्प्लुत्य गच्छेच्चेत्तुल्यपादिकाम् ।
मण्डूकस्य द्वितीयोऽयं भेदः प्रोक्तस्तदा बुधैः ॥ ७८

[ ॥ २ ॥ ]

*

त्रिपताकौ करौ कृत्वा समं वा विषमासनम् ।
स्थित्वा स्थित्वा समुत्प्लुत्य चरणौ दधती क्षितौ ॥ ७९
पुरो गच्छति पश्चाच्च लघुमानेन चेत्तदा ।
पश्यन्ती धरणीं प्रोक्तः प्लवभेदस्तृतीयकः ॥ ८०

[ ॥ ३ ॥ ]

*

पुरतः पृष्ठतश्चैव व्युत्क्रमक्रमयोगतः ।
वामदक्षिणयोर्नृत्यं चतुर्धा यत्र जायते ।
मण्डूकस्य तदा भेदश्चतुर्थः कीर्तितो बुधैः ॥ ८१
[ ॥ ४ ॥ ]
॥ इति मंडूककलासभेदचतुष्टयम् ॥
*

[ हंसकलासाः । ]

ललितैश्चरणन्यासैर्यत्र हंसीव हस्तकौ ।
हंसास्यौ संविधायाथ विचित्रगतिपेशलम् ॥ ८२
यत्र नृत्यति स प्रोक्तः कलासो हंससंज्ञकः ।
मकरं दक्षपार्श्वस्थं पताकं वामहस्तकम् ।
पुरतो यत्र हंसीव यायाद्भेदः स आदिमः ॥ ८३
[ ॥ १ ॥ ]
*

मुकुलं हस्तमारभ्य पादाभ्यां पृष्ठतो व्रजेत् ।
विचित्रलास्यभेदज्ञा हंसीवासौ द्वितीयकः ॥ ८४
[ ॥ २ ॥ ]
*

हस्तं हंसास्यमाधाय पार्श्वयोर्ललितां गतिम् ।
आलापवर्णतालानां क्रमतो यत्र नृत्यति ।
हंसीवासौ तृतीयोऽयं भेदः प्रोक्तः पुरातनैः ॥ ८५
[ ॥ ३ ॥ ]
॥ इति हंसकलासत्रयम् ॥
॥ इति द्वाविंशतिकलासकरणानि ॥
*

[ उपाध्यायलक्षणम् । ]

अथोपाध्यायलक्षणम्–
रूपस्वी निजसंप्रदायधिषणो मोक्षग्रहज्ञः क्षमी[1]
मेधावान् ध्वनितत्त्ववित्सुनिपुणस्ताले लये कोविदः ।
शिष्यं शिक्षयितुं नवीनरचनावाद्यप्रबन्धे सुधीः
उद्वेत्ताऽखिलनृत्यभङ्गिभणितेर्नाट्यागमे पारगः ॥ १
स्थायानामधिकोनतासुकुशलो माधुर्यवित्सुध्वने[2]-
र्वाद्येऽथो मुखवाद्यजे निपुणधीः स्यान्नृत्यगीतादिनः ।

1 BC क्षमें । 2 ABC सुध्वेने. Kumbha in भ० को. सुध्वने पृ. ८०६.

साक्षात् स्थापयिता स्थितौ जनमनोहारी स्वयं रञ्जकः
पात्रस्यापि हृदेव रूपकविधौ निर्माणकर्मोद्धुरः ॥ २
[1]नृत्यस्याखिलनृ(?कृ)त्यवित् समसुखप्रा(?स्था)यग्रहज्ञाग्रणी-
र्दोषाणामपिधानवित् स्वयमसौ स्यान्नृत्यगीतादिनः ।
प्राप्तप्रौढिसुशस्तवाक्यविदुरो धीरो गुणोल्लासको
नाट्ये शुद्धगुणा[2]र्णवो निगदितस्तज्ज्ञैरुपाध्यायकः ॥ ३

॥ इत्युपाध्यायलक्षणम् ॥

*

## [ आचार्यः । ]

आचार्यः श्रुतिकोविदः पटुमतिर्वाक्ये सुवेषो रसे
ज्ञाता लक्षणलक्ष्यतत्त्वविषये पू(?तू)र्यत्रये पण्डितः ।
हास्यज्ञो नृपसंसदि प्रगुणधीरास्योद्भवे वादने
नानादेशविचित्रकाकुरचनाप्रावीण्यविद्याध्वगः ॥ ४

॥ इत्याचार्यः ॥

*

## [ नटः । ]

प्रोक्तश्चात्र नटो नवीनरचने भाषादिनस्तत्त्ववित्
चित्तज्ञश्च चतुर्विधाभिनयविन्नाट्यागमे पारगः ।

॥ इति नटः ॥

*

## [ नर्तकः । ]

संप्रोक्तोऽपि च नर्तको निशितधीर्मार्गाख्यनृत्ये परं
विख्यातोऽत्र कृतश्रमोऽङ्गचलने दक्षः स्वकीये स्मृतः ॥ ५

॥ इति नर्तकः ॥

*

## [ वैतालिकः । ]

मर्मज्ञोऽखिलरागराजिषु परं वेदी[3] पुनः किङ्किणी-
वाद्ये चापि वृतोऽत्र नर्तकगणैर्दक्षो मतश्चारणः ।
भाषाशेषविशेषवित्पटुमतिर्लोकापवादे नृणाम्
सर्वेषामपि नर्मशर्मकरणे दक्षोऽत्र वैतालिकः ॥ ६

॥ इति वैतालिकः ॥

*

1 ABC °त्यसा° । 2 ABC °गुणेर्णव° । 3 ABC चेही. Kumbha in भ. को. वेदी पृ. ९४७.

यद्वृत्तिं भुञ्जते विप्राश्चतुर्दिक्षु गृहे स्थिताः ।
आचार्यश्च स्वयं योऽरिविनयाचारशिक्षणे ॥ ७

इति श्रीराजाधिराजश्रीकुम्भकर्णमहीमहेन्द्रेण विरचिते सङ्गीतराजे नृत्यरत्नकोशे प्रकीर्णकोल्लासे वृत्त्यादिलक्षणं नाम प्रथमं परीक्षणं [समाप्तम् ।]

---

## चतुर्थोल्लासे द्वितीयं परीक्षणम् ।

[ मङ्गलम् । ]

यं न्यायप्रविचारेणोपपत्त्यागमगोचरम् ।
अक्षपादादयो नित्यं मन्वते तं नुमः शिवम् ॥ १

अथ न्यायाः–

संगरेषु परशस्त्रवञ्चनं स्वीयशस्त्रपरितापनं रिपौ ।
संविधातुमुचिता शरीरजा न्यायशब्दगणनात्र वर्तना ॥ २
भारतः स खलु सात्त्वतो परो वार्षगण्य इह कैशिकस्तथा ।
तद्भिदास्तु किल वेदसंमिता वृत्तिषु क्रमतया निदर्शिताः ॥ ३
तस्य लक्षणविचारशुद्धये ब्रूमहेऽत्र सकलान् प्रविचारान् ।
चारिकानिगदितास्तु विचित्रा याः पुरा च गतयः परिक्रमाः ॥ ४
भारते निगदिताः प्रविचाराः शस्त्रमोक्षणविधानगोचराः ।
वामकेन बिभृयात् फलकान्तं दक्षिणेन तु कृपाणमादरात् ॥ ५
तौ करावुपसृतौ विनिधायाक्षिप्य तौ च तत एव शिक्षितः ।
भ्रामणं च फलकस्य विदध्यात्तूभयोरथ सपार्श्वयोः सुधीः ॥ ६
भ्रामयेच्च परितः शिरसस्तत् खड्गिनं त्वथ शिरःकपोलयोः
अन्तरा च मणिबन्धतस्तथोद्वेष्टयेच्च विधिना प्रयत्नवान् ॥ ७
भ्रामणं च फलकस्य विदध्यात् संभ्रमेदुपरि मस्तकं यथा ।
भारते विधिरयं मुहुर्मुहुः शस्त्रपात उचितः कटीतटे ॥ ८

॥ इति भारतः ॥ [ १ ॥ ]

*

सात्त्वतेऽपि विधिरेष[1] शस्यते पृष्ठतो भ्रमणमत्र शस्त्रगम् ।
शस्त्रपातविधिरत्र पादयोः कीर्तितो भरतमुख्यसूरिभिः ॥ ९

॥ इति सात्त्वतः[2] ॥ [ २ ॥ ]

*

---

1 ABC विधेरेष । 2 ABC सात्वितः ।

वार्षगण्यविषयोऽपि दृश्यतेऽप्येवमेव फलकस्य संभ्रमः ।
पृष्ठतो निगदितस्त्विहाधिकः स्कन्धदेश अथ वक्षसि स्फुटम् ॥ १०
शस्त्रहस्तविषयं तथा किलोद्वेष्टनं निगदितं तथा पुनः ।
हृत्प्रदेशविषयं च तद्विदा शस्त्रपातनमिहोदरीकृतम् ॥ ११

॥ इति वार्षगण्यः ॥ [ ३ ॥]

*

भारतेन गदितस्तु कैशिकः शस्त्रपातनविधिस्तु मूर्द्धनि ।

॥ इति कैशिकः ॥ [ ४ ॥]

*

सौष्ठवान्विततनुःसुशिक्षितो न्यायवर्गमनुमाश्रितो नटः ॥ १२
शक्तितोमरशरासनादिकान्यायुधान्यपि समाचरेत् सुखम् ।
सौष्ठवं वरमुशन्ति तद्विदो येन तेन हि विना कृताः परम् ॥ १३
युद्धकर्मणि च नर्त्तनेऽपि वा नैव भान्ति निखिलाः प्रविचाराः ।
न प्रहारविधिरत्र वास्तवः संज्ञयैव निखिलो विधीयते ॥ १४
तं प्रहारमथवात्र दर्श[ये]दैन्द्रजालिकमथात्र मायया ।
एते न्यायाः प्रयोक्तव्याश्चारीभिः शस्त्रमोक्षणे ॥ १५

॥ इति न्यायलक्षणम् ॥

*

## [ पेरणीलक्षणम् । ]

श्वेतचन्दनकर्पूरभस्माद्यक्तकलेवरः ।
शिखावान् मुण्डितशिरा लसत्पुष्पावतंसकः ॥ १६
क्वणद्घर्घरिकाजालजङ्घाजङ्घालविभ्रमः ।
लयतालकलाभिज्ञः पञ्चाङ्गज्ञानपण्डितः ॥ १७
जितश्रमो[1]ऽश्लथश्लिष्टसंधिस्ताण्डवपण्डितः ।
दक्षः कलासु सर्वासु सभाजनमनोहरः ॥ १८
सुरेखो नृत्यशास्त्रज्ञश्चण्डः शारीरपेशलः ।
सभावरससंयुक्तं यो नृत्यते(?ति) स पेरणी ॥ १९

*

घर्घरो विषमं गीतं कविचारस्तथैव च ।
भावाश्रयश्च व्याचष्ट पञ्चाङ्गानि नृपोत्तमः ॥ २०
तत्र घर्घरिका वाद्ये वहनिर्घर्घरो मतः ।
तस्य भेदाः षडेवात्र पडिवाडस्तदादिमः ॥ २१

---

1 ABC जिताश्रमो ।

ततश्चापडपश्चैव शिरिपिट्यपि संज्ञितः ।
ततश्चालगपाटः स्यात्ततः शिरिहिराह्वयः ॥ २२
ततः खुलहल(?लुहुलु)श्चेति तल्लक्ष्म व्याहरेऽधुना ।

*

प्रपदेन भुवि स्थित्वा पाष्णर्या पार्ष्णिद्वयेन वा ॥ २३
क्रमेण कुट्टनं भूमेः पडिवाड इति स्मृतः ।

॥ इति पडिवाडः ॥ १ ॥

*

भूमेर्निकुट्टनं पादतलाच्चापडपो भवेत् ॥ २४

॥ इति चापड[प]ः ॥ २ ॥

*

भूलग्नतलपादस्य सरणं यत्पुरो भवेत् ।
तथापसरणं पश्चान्मुहुः शिरिपिटी भवेत् ॥ २५

॥ इति शिरिपिटी ॥ ३ ॥

*

क्रमेण पादयोर्व्योम्नि कोमलं यत् प्रकम्पने ।
स ह्यलगवाडः(?पाटः)स्यादित्युक्तं नृत्यकोविदैः ॥ २६

॥ इत्यलगवाडः (? पाटः) ॥ ४ ॥

*

विधायैकं समं पादमङ्घिरन्यः पुरो यदि ।
प्राहुः शिरिहिरं धीरास्तदा केचन तद्विदः ॥ २७

॥ इति शिरिहिरम् ॥ ५ ॥

*

प्रपदस्थितवामाङ्घ्रेः पाष्णर्योर्यत् कुट्टनं भुवः ।
तद्वत् स्थितस्य चान्यस्य भ्रमः सव्यापसव्यतः ॥ २८
योऽसौ खुलुहुलुः प्रोक्तो घर्घरो नृत्यकोविदैः ।

॥ इति खुलुहुलुः ॥ ६ ॥

*

सरतो युगपद्यत्र प्रपे(?प)दे स तु रुन्धकः ॥ २९

॥ इति रुन्धकः ॥ ७ ॥

*

इत्यादयः प(?प्र)धानेन घर्घराः शोभयान्विताः ।
तालानुगामिनस्तूह्याः सर्व एव विपश्चिता ॥ ३०
सूची च नागबन्धश्च मुखबन्धोऽम्बुजासनम् ।
स(?उ)न्मुखावाङ्मुखी चैव पुनश्चैव हि सन्मुखी ॥ ३१

पादास्फाली विलम्बी च हृदिगा जानुगा तथा ।
चिरं विलोकितव्येति कला द्वादश कीर्तिताः ॥ ३२
चित्रका पञ्चकारूढेत्येवं रेखा त्रिधोदिता ।
सर्वगात्रेषु शिथिलो यदा नृत्यति केवलम् ।
चक्षुषा श्लाघ्यते वाद्यं(?) रेखा स्याच्चित्रिका तदा ॥ ३३

॥ इति चित्रका ॥

*

घर्घरो मुद्रितं चैव बहुधा चाङ्गचालनम् ।
प्रचुरा हस्तचालिश्चेद्रेखेयं पञ्चका मता ॥ ३४

॥ इति पञ्चका ॥

*

गीताक्षरक्रमाद्वाद्यं तालमानेन वादयेत् ।
घर्घरा गृह्यते सर्वा रूढा रेखा तु सा मता ॥ ३५

॥ इति रूढा ॥

*

स्यादत्रोत्प्लुतिपूर्वं यत्करणं विषमं हि तत् ।

॥ इति विषमम् ॥

*

गीतं सालगमत्र स्याद्यदुक्तं गोण्डलीविधौ ॥ ३६

॥ इति गीतम् ॥

*

नायको वर्ण्यते यत्रोत्तमः स कविचारकः ।

॥ इति कविचारकः ॥

*

भावाश्रयो बुधैर्ज्ञेयो विकृतार्थानुकारवान् ॥ ३७

॥ इति भावाश्रयः ॥

॥ इति पेरणीलक्षणम् ॥

*

अथ पेरणितः सम्यग् वक्ष्ये पद्धतिलक्षणम् ।
संप्रदायविदो रङ्गभूमिदेशमुपागताः ॥ ३८
गोण्डलीविधिवच्चात्र कुर्युर्धिधिधिधीतितैः ।
गम्भीरध्वनिमातोद्यवादनं मिलिताश्च ते ॥ ३९
ततो विलम्बितलयं रिगोण्युटवणाश्रयम् ।
पादत्रयं वादयेयुर्द्विर्द्विर्निःसारुतालतः ॥ ४०
ततो विकृतवाग्वेषभूषो रङ्गभुवं विशेत् ।
बोडकः प्राज्यहास्यैकरसस्तस्मिन् प्रनृत्यति ॥ ४१

रिगोण्युपशमेनाथ प्रनृत्यन् पेरणी विशेत् ।
ततः शान्तेषु वाद्येषु सहतालधरैः परम् ॥ ४२
गारुकौ वाद्यमानेऽथ ताले निपुणवादके ।
यद्वा सरस्वतीकण्ठाभरणे मर्द्दलादिनः ॥ ४३
मनोहरे तालरसे(?रसे ताले) ध्वनौ च व्याप्तिमृच्छति ।
पेरणी प्रारभेणा(?ता)थ [1]घर्घरान् पूर्वसूचितान् ॥ ४४
ततो निबद्धे कविते कूटे वर्णसरेण वा ।
निःसारुणा च तालेन विषमं नृत्यमाचरेत् ॥ ४५
नृत्यन् सालगसूडेन रेखां च स्थापनं तथा ।
हृद्यां च वहनीं गीतनर्तनं दर्शयेत् क्रमात् ॥ ४६
विषमं च प्रहरणानुगमाभोगवादने ।
कविचारान् प्रकुरुते तथा भावाश्रयानपि ।
लोकमार्गानुसारेण ततोऽन्यानपि दर्शयेत् ॥ ४७

॥ इति पेरणीपद्धतिः ॥

*

वाद्येषु वाद्यमानेषु करणैरञ्चितादिभिः ।
दुष्करैः शस्त्रधाराथ(?प)वञ्चनैर्भ्रमणैरपि ॥ ४८
प्रांशुवंशोपरिगतैर्वरत्राचित्रचंक्रमैः ।
उच्चैः पक्षिवदुड्डीनैर्मृदङ्गपरिवर्त्तनैः ॥ ४९
नर्त्तनैर्विषमैरेवमादिकैर्नृत्यमाचरन् ।
शस्त्रसंकटसंपाते छुरिकानर्तनादिषु ॥ ५०
भ्रमर्यादिषु च प्रौढो रज्जुसञ्चारचञ्चुकः ।
भारस्य भूयसो वोढा बुधैः कोल्हाटिकः स्मृतः ॥ ५१

॥ इति कोल्हाटिकः ॥

*

पेरणीव नटो नारी नर्त्तयन्नर्त्तकोऽपि च ।
कोल्हाटिकः[2] प्लुतिं कुर्वन् यद्वैरी स्यात्पलायनात् ॥ ५२

इति श्रीराजाधिराजश्रीकुम्भकर्णविरचिते सङ्गीतराजे नृत्यरत्नकोशे प्रकीर्णकोल्लासे न्यायादिपरीक्षणं द्वितीयं [ समाप्तम् ]

——— o ———

1 Kumbha in भ. को. पृ. ८९० पेरणी प्रारभेन्नाट्यं घर्घरान् पूर्वसूचितान् । ततो निबद्धे कविते गूढे वर्णसरेण वा ॥ 2 AB °ल्हां° ।

## चतुर्थोल्लासे तृतीयं परीक्षणम् ।

येनाह्लादयितुं विश्वं ससुरासुरमानवम् ।
शिक्षिता पार्वती लास्यं तमानन्दघनं नुमः ॥ १

*

## [ अथ लास्याङ्गानि । ]

स्थितपाठ्यं द्विमूढाख्यं त्रिमूढं पुष्पमण्डिका ।
प्रच्छेदकः शेषपदमासीनं सैन्धवं तथा ॥ २
उक्तप्रत्युक्तकं तद्वदुत्तमोत्तमकं तथा ।
वैता(?भा)विकं च त्रिपदं लास्याङ्गानि दशद्वयम् ॥ ३
विरहानलतप्ताङ्गीमदनोन्मीलनीकृता ।
पठेत् प्राकृतमासीना स्थितपाठ्यं तदीरितम्[1] ॥ ४

यथा–

[2]यं एसो विरहप्पहावजणिओ अग्गी तणुं तावए
जं पंकेरुहचंदचंदणरसा व(?वे)दंति नो शीयला । ५
जं इण्हि मह मन्महेण हियय़ं मोहंदकूमेव(धकूवेठि?)दं
तं एदं सह वल्लहेण चरिदं संच्छा(ठा)णसंदंशितं ॥ ६

*

[3]मयणप्पहुकोवताविदाए मह सीदाइं(?भीदाए) कुरंगलोअणाए ।
सहि वल्लहसंगवंचिदाए शरणं पुम्मदलाइं जीयसा(स्स) ॥ ७

*

[4]अंगाइं पुंखिदशिलीमुहजज्जराइं
जं निम्मियाइं मयणेण महाउहेण ।
एअस्स पावहियअस्स महप्पसाओ
घित्तूण दोसमलियं पय(?इ)णो गयासी ॥ ८

*

---

1 BC °दीरि यथा ।

2 य एष विरहप्रभावजनितोऽग्निस्तनुं तापयति
यत् पङ्केरुहचन्द्रचन्दनरसा वेदयन्ति नो शीतलाः ।
यदिदानीं मम मन्मथेन हृदयं मोहान्धकूपे स्थितं
तदेतत्सह वल्लभेन चरितं संस्थानसंदर्शितम् ॥

3 मदनप्रभुकोपतापितायाः मम भीतायाः कुरङ्गलोचनायाः ।
सखि वल्लभसङ्गवञ्चितायाः शरणं पद्मदलानि जीवस्य( ? ) ॥

4 अङ्गानि पुङ्खितशिलीमुखजर्जराणि
यन्निर्मितानि मदनेन महायुधेन ।
एतस्य पापहृदयस्य महाप्रसादः
गृहीत्वा दोषमलीकं पतेः गताऽऽसीत् ॥

[1]अंगाइ शुंखलिद कंपविमोहचिंता-
निद्दातणुत्तकुसुमाउहकंसिदाइ ।
एसा वि तत्थ रयणी शशिकालकूटं
दंसेइ किं सहि कुणेमि पिवप्पदा(वा?)से ॥ ९

*

[2]मोणं करिऊण मया
शहियण मज्झम्मि रक्खियो अप्पा ।
तहवि हले मह वयणे
मह्रु[अ?]रचरिओ पया(वे)सए दुअणो ॥ १०

॥ इति स्थितपाठ्यम् ॥ १ ॥

*

श्लिष्टभावपरं वाक्यं तथा युक्तपदक्रमम् ।
मुखप्रतिमुखोपेतं विचित्रार्थं द्विमूढकम् ॥ ११

यथा–

अङ्कुरितां मम हृदये प्रेमलतां रमणजलधरो मुदितः ।
सिञ्चति जीवनरचनैरिह वचनैरुन्नतिं नेतुम् ॥ १२
नीरक्षी[3]रितचुम्बितानि रचयन्नुत्तालचेतोभुवा,
दन्तग्राहमनिन्दिताधरपुटे दष्टो मया वल्लभः ।
ग्रामीणः परिहृत्य मामुपवने यातस्ततोऽनन्तरम्,
मातर्मूर्च्छति मीलति प्रचलति प्रोत्कम्पते मे मनः ॥ १३

॥ इति द्विमूढम् ॥ २ ॥

*

यद्वाक्यं नैकभावार्थं समवृत्तमलङ्कृतम् ।
ललिताक्षरबन्धं च त्रिमूढं तत् प्रकीर्त्तितम् ॥ १४

यथा–

भयहर्षरोषरोदनवदनसंभेदनानि कुर्वाणौ ।
स्मरसङ्गरसंगमिनौ जितमिति नौ मन्मथो हसति ॥ १५

---

1 अङ्गानि शृंखलितानि कम्पविमोहचिन्ता-
निद्रातनुत्वकुसुमायुधकर्षितानि ।
एषापि तत्र रजनी शशिकालकूटं
दंशयति किं सखि करोमि प्रियप्रवासे ॥

2 मौनं कृत्वा मया सखिजनमध्ये रक्षित आत्मा ।
तथापि हले मम वदने मधु[क]रचरितः प्रविशति दुर्जनः ॥

3 ABC °क्षिरित ।

कुचोन्नमनचातुरीचलितकञ्चुलीबन्धया,
कपोलपुलकावलीकलितयाऽऽयतापाङ्गया ।
विमोटनविवर्त्तने विदितसन्धया संगमे
त्वयाभि[1]लषिते कथं सुमुखि मानमालम्बते(?से) ॥ १६

॥ इति त्रिमूढम् ॥ ३ ॥

*

नर्त्तक्या विविधं यत्र गीतं वाद्यं च नर्त्तनम् ।
नमो(?मनो)वाक्कायचेष्टाभिर्हीनं स्यात् पुष्पमण्डिका ॥ १७

[ ॥ इति पुष्पमण्डिका ॥ ४ ॥ ]

*

चन्द्रिकातपसंतप्तास्त्यक्तलज्जाः सुलोचनाः ।
प्रियान् कृतापराधान् वै यान्ति प्रच्छेदकस्तु सः ॥ १८

यथा–

सखि स्फुरति यामिनी शशिनमुन्नमय्यांशुभिः
ज्वलद्भिरिव मामयं स्पृशति मानमुन्मूलयन् ।
अतो विगतलज्जया सुरतसंगरे सज्जया
ममापि विदितागसं प्रियमुपासितुं गम्यते ॥ १९
असौ हरिणलाञ्छनच्छलविकाशिहव्याशनो
वा( ?व )नान्तरमिवान्तरं मम विलीलमां(नतामं ?)गति ।
अतोऽन्यवनितारतं रमणमप्रियेऽपि स्थितम्
व्रजामि सखि रोधिनीमपनयामि लज्जामपि ॥ २०

॥ इति प्रच्छेदकः ॥ ५ ॥

*

यत्रासने सुखासीनास्तत्र्याद्यातोद्यवादने ।
गायन्ति गायकाः स्वैरमाहुः शेषपदं हि तत् ॥ २१

॥ इति शेषपदम् ॥ ६ ॥

*

चिन्ताशोकाकुलत्वेन वाक्ये च (?चा)न्तिनयेऽपि च ।
विमूढाः खण्डिताः कान्तास्तदासीनमिहोच्यते ॥ २२

यथा–

प्रसरति दिनमणितेजसि विगलति तमसि प्रकाशिते नभसि ।
अपनीताधररागं पश्य वयस्य ममागते रमणम् ॥ २३

1 ABC त्वयभि° ।

ता(?भा)लेऽलक्तकमञ्जिताधरमुरः कर्पूरमुद्रं वहन्
निःशङ्कं पतिरभ्युपैति वियति प्रत्यग्रसूर्योदये।
चिन्तासागरसंनिमग्नमनसा नीता मया यामिनी
किं कुर्वे सखि कैतवं कलयता मुग्धामुना वञ्चिता॥ २४
॥ इत्यासीनम्॥ ७॥

*

यत्र पाठ्यं विना नाठ्यं भाषा सैन्धवदेशजा।
पात्रमुत्समयं यत्र तत् सैन्धवमिहोदितम्॥ २५
॥ इति सैन्धवम्॥ ८॥

*

साधिक्षेपपदं यत्र स विचित्रार्थगीतकम्।
प्रसादकं मर्षितस्येत्युक्तप्रत्युक्तकं मतम्॥ २६

यथा–

प्राप्तो वसन्तसमयः समयानभिज्ञ
रोषं परित्यज भजस्व मयि प्रसादम्।
उत्तुङ्गपीवरकुचद्वयभूरिभारा-
माराधितोऽपि न हि रक्षितुमीहसे माम्॥ २७
उदेति हिमदीधितिर्वहति गन्धहारी हरि-
श्चरन् कुमुदकानने [स्म]रपयोनिधिर्वर्धते।
इमं समयमुल्बणं परिकलय्य मां व्याकुलां
प्रसीद चरणानतां कठिन कातरां पालय॥ २८
॥ इति उक्तप्रत्युक्तम्॥ ९॥

*

यत्राभिनयबाहुल्यं नानाभावमनोहरम्।
वाक्यं नैकरसं चित्रमुत्तमोत्तमके भवेत्॥ २९

यथा–

सहर्षमवलोकनं विहितभीतमालिङ्गनं
सरोषमपि भाषणं सजललो[1]चनं रोदनम्।
इति प्रथमसंगमे चतुर[2]चित्तचेतोहरो
विचित्ररससंकरो जयति कोऽपि वामभ्रुवः॥ ३०
वेषे लेप्यनितम्बिनीमनुहरत्यम्भोजिनीं नेत्रयोः
भ्रूभङ्गे स्मरकार्मुकं कुचयुगे तत् कुम्भिकुम्भद्वयम्।

---

1 ABC रोचनं। 2 ABC repeat चित्त।

वाण्यामन्यभृतां तथा च धरणीं श्रोण्या[1]मियं भामिनी
स्रष्टिर्मन्मथनिर्मिता रसमयी बाभाति[2] भूमण्डले ॥ ३१

॥ इति उत्तमोत्तमकम् ॥ १० ॥

*

कान्ते स्वप्नोपलब्धेऽपि यत्र कामवशं गता ।
विभावान् विविधान् यत्र कुर्याद्वैता(भा)विकं हि तत् ॥ ३२

यथा–

अद्याकर्णय नैशिकं सखि मया कान्तश्चिरं प्रोषितो
नेत्रा( ?निद्रा )मुद्रितनेत्रयापि शयने साक्षादिवावेक्षितः ।
मायासङ्गमभङ्गभी[3]रुतरयेवोन्मज्ज्य लज्जाजलात्
कण्ठग्राहमनन्दितः परिवृतः प्रोल्लासितो मोदितः ॥ ३३

उचति(?उचित) माचरितं मम निद्रया शशिशरीरसमाहितमुद्रया ।
अथ सजातजनाकथितः[4] पतिः परपुरादपहृत्य समर्पितः ॥ ३४

॥ इति वैभाविकम् ॥ ११ ॥

*

आकारमपि[5] कान्तस्य पश्यन्ती कामपीडिता ।
यत्र खिद्यति दुश्चित्ता प्रिया चित्रपदं हि तत् ॥ ३५

यथा–

कान्तं चित्रपदे(?टे) विलिख्य विदधे यावत्तदालापनं
लब्धो जीवन वासरैः कतिपयैस्त्यक्ष्यामि न त्वामिति ।
तावन्मज्जन ( ? द ) नल्पबाष्पसलिले संभिन्नभिन्नाक्षरम्
क्षे(?खे)दस्वेदकपाटकोटिघटितं कण्ठे विशीर्ष(?र्ण) वचः ॥३६

मया सखि विलोकितो रमणसन्निवेशं वहन्
इतो विषमसायकः क्वचन शिल्पिना कल्पितः ।
ततः स मयि रोषवानथ विभाव्यमानोऽथ वा
महेशाकृतिरीदृशी विरहितो(?ता) मोहिनी जृम्भते ॥ ३७

॥ इति चित्रपदम् ॥ १२ ॥

॥ इति द्वादशमार्गलास्याङ्गानि ॥

*

## [ देशी लास्याङ्गानि ]

सौष्ठवं [6]स्थापना तालो लढिश्चालिश्चलाचलिः ।
सुकलासं थरहरं किंतूल्लासं उरोङ्गणम् ॥ ३८

---

1 AB श्रोण्यां । 2 AB भावाति । 3 ABC °भङ्गमभीरु° । 4 ABC अथ सज्जनजनाकथितः पतिः । 5 ABC अकार° । 6 BC स्थापयेना° ।

ढिल्लायी त्रिकलिर्भावो देशीकारं निजापणम् ।
अङ्गहारो मनष्ठेवा लयो मुखरसस्तथा ॥ ३९
थसको वितडं शङ्का नीकीनमनिकापि च ।
विवर्त्तनं मसृणता विहसी गीतवाद्यता ॥ ४०
विलम्बिताभिनयावङ्गानङ्गं कोमलिकापि च ।
तूकमूयार एतानि षट्त्रिंशत्संमितानि च । ४१
देशीयलास्यकाङ्गानि राजराजो न्यरूरुपत् ॥
सौष्ठवं यत् पुरा प्रोक्तं तस्य पात्राङ्गुलैस्तु या । ४२
चतुभिरष्टभिश्चैव यद्वा द्वादशभिस्त्रिधा ॥
खर्वता जानुकक्ष्यूरुकण्ठेष्वीर्ष्येच्छयाथ वा ।
तत्तद्देशानुसारेण तत् सौष्ठवमिहोदितम् ॥ ४३

॥ इति सौष्ठवम् ॥ १ ॥

*

यच्च सामग्र्यसंपत्तौ कुतपे प्रगुणीकृते ।
स्वस्थाने स्थापयेदङ्गं नर्त्तकी स्थापना तु सा ॥ ४४

॥ इति स्थापना ॥ २ ॥

*

ईषन्मन्दानिलचलत्पद्मपत्रोदबिन्दुवत् ।
यत्राङ्गनाङ्गसंचारो भाति तालः स उच्यते ॥ ४५

॥ इति तालः ॥ ३ ॥

*

सुकुमारं सुमधुरं सविलासं च चालनम् ।
युगपत् बाहुकक्ष्यूरु[1]न्यस्तत्वे लढिरुच्यते ॥ ४६
केचिदानन्दसंदोहं सङ्गीतप्राप्तिसंभवम् ।
सौन्दर्यातिशयोपेतं[2] कर्माहुर्लढिसंज्ञितम् ॥ ४७

॥ इति लढिः ॥ ४ ॥

*

युगपन्नाभिकक्ष्यूरुपादानां सविलासकम् ।
नातिमन्दद्रुतं तालसाम्यान्माधुर्यपेशलम् ।
चालनं चालिरित्युक्ता त्वचलस्थितिभूभृता ॥ ४८

॥ इति चालिः ॥ ५ ॥

*

1 ABC °क्ष्योरू । 2 ABC सौन्दर्ी° ।

चलाचलिश्च सैवोक्ता शैघ्र्यसांमुख्यनिर्भरा।
॥ इति चलाचलिः ॥ ६ ॥

*

लास्याङ्गानि सचारीणि पादादीनां च चालनम् ॥ ४९
कृत्वातिप्रौढितो यत्र गीतवाद्यादिमेलनम्।
मध्ये मध्ये नटी कुर्यात् सुकलासं तदा स्मृतम् ॥ ५०
केचित् स्थानकचारीणां हस्तकाद्यङ्गकस्य च।
गीतवाद्यलये मेलं कलासमभणन् बुधाः ॥ ५१
॥ इति सुकलासः ॥ ७ ॥

*

नृत्यन्ती नर्त्तकी यत्र भुजावधि विलासिनी।
कुचयोः कम्पनं कुर्याच्छीघ्रं थरहरं तु तत् ॥ ५२
॥ इति थरहरम् ॥ ८ ॥

*

गीततालसमं यत्र कटिकुं(?कु)चभुजादिनः।
नर्तकी चालनं कुर्यात् लास्याङ्गं किन्तु तत्स्मृतम् ॥ ५३
॥ इति किन्तु ॥ ९ ॥

*

भावप्रकाशकैर्य[1]त्र(? श्लथै)[2]रङ्गोल्लासैर्मुहुर्मुहुः।
सूक्ष्मैर्द्विस्त्रिगुणैर्वापि द्रुततालान्निरूपितात्।
स उल्लासो यत्र पात्रं मनो हरति दर्शयत् ॥ ५४
॥ इत्युल्लासः ॥ १० ॥

*

अग्रतः पृष्ठतोऽधस्तादूर्ध्वं वा चालनं भवेत्।
तालमानेन कुचयोः स्कन्धयोर्युगपत् क्रमात् ॥ ५५
विलम्बेनाविलम्बेन तदुरोङ्गणमुच्यते।
विलम्बितं द्रुतं वापि ललितं यत् कुचांशयोः।
ललिते चालने तिर्यक् केषांचित्तदुरोंगणम् ॥ ५६
॥ इत्युरोङ्गणम् ॥ ११ ॥

*

यत्राङ्गं नर्त्तकी नृत्ये सहेलाभावमन्थरम्।

---

1 BC यत्रर्तुलिगो°। 2 CF नर्तक्यास्त्वरया तालाद् द्विगुणत्रिगुणैस्तदा। भावाभिव्यञ्जकैः सूक्ष्मैर्ललितैः श्लथबन्धिभिः। अङ्गैरुल्लसनैर्युक्तमुल्लासं संप्रचक्षते । वेमः in भ. को. पृ. ८५.

किञ्चित् सौष्ठवमाधुर्यविलासं भावभाविता ।
कुरुते कथिता सा तु ढिल्लायी लास्यकोविदैः ॥ ५७

॥ इति ढिल्लायी ॥ १२ ॥

*

लयतालानुगैर्यत्र शिरोभिः पञ्चभिर्नटी ।
विधुताकम्पितधुतपरिवाहितकम्पितैः ॥ ५८
चार्यां वा स्थानके वापि प्रेक्षकाणां मनो यदा ।
तद्गतं कुरुते सोक्ता त्रिः कलिः कलिनोदिना ॥ ५९

॥ इति त्रिकलितः ॥ १३ ॥

*

यत्र नृत्यानुगं गीतं नाट्यं च लयसुन्दरम् ।
पश्यन्ती हर्षमासाद्य पुष्यतीव कलाङ्कुरान् ।
स्वभावं सालसं नृत्ये स भावो भावनोदितः ॥ ६०

॥ इति भावः ॥ १४ ॥

*

अग्राम्यं सुन्दरं नानादेशरीतिसमन्वितम् ।
तत्तद्देशानुसारेण देशीकारं तु नर्तनम् ॥ ६१

॥ इती देशीकारम् ॥ १५ ॥

*

रेखासौष्ठवसंयुक्तं हस्तकानुगदृष्टिकम् ।
नायकेच्छानुगं नृत्यं निजापणमिति स्मृतम् ॥ ६२

॥ इति निजापणम् ॥ १६ ॥

*

पूर्वोत्तरार्धयोर्देहे चापवल्ललितानतिः ।
तालमानसमायुक्तो सोऽङ्गहारः स्मृतो बुधैः ॥ ६३

॥ इति अङ्गहारः ॥ १७ ॥

*

हस्ताद्यङ्गक्रियायोगादभ्यस्वा(?स्ता)दन्य एव यः ।
कोऽप्यपूर्वो गुणः सूक्ष्मो लयत्रितयपेशलः ।
नानाभावयुतस्तज्ज्ञैर्मन इत्यभिधीयते ॥ ६४

॥ इति मनः ॥ १८ ॥

*

कटाक्षौ यत्र नर्त्तकयाः सोत्तरङ्गौ स्वभावतः ।
नानाभावालिङ्गिताङ्गौ नृत्ये ठेवेति कीर्त्तिता ॥ ६५

॥ इति ठेवा ॥ १९ ॥

*

नृत्यन्ती यल्लये कापि वेगाच्चेदपरौ लयौ ।
साश्चर्यं योजयेन्नृत्ये नर्त्तकी स लयः स्मृतः ॥ ६६

॥ इति लयः ॥ २० ॥

*

यद्रसं तनुते नृत्यं तद्रसानुगुणं सुखम् ।
पात्रं वर्णविपर्यासात् कुर्यान्मुखरसस्तदा ॥ ६७

॥ इति मुखरसः ॥ २१ ॥

*

थसकः स्यात् सललितं स्तनाधोनयनं लयात् ।

॥ इति थसकः ॥ २२ ॥

*

यच्चारीकरणाद्यं स्यात् स्वभावाल्ललितं बलात् ॥ ६८
कुरुते कठिनं तद्धि वितडं कीर्त्तितं बुधैः ।

॥ इति वितडम् ॥ २३ ॥

*

पूर्वमौद्धत्यतो यत्र व्यापार्याङ्गानि नर्त्तकी ॥ ६९
सविभ्रमं पुनस्तानि पुरतः पार्श्वयोरपि ।
आहरन्ती वञ्चयते जनं शङ्का तदोदिता ॥ ७०

॥ इति शङ्का ॥ २४ ॥

*

त(?य)दा स्यान्नर्त्तकी नीकी सङ्गीते सलये तदा ।
स्खलितावर्जिता रङ्गे नृत्यनीतिविदो विदुः ॥ ७१

॥ इति नीकी ॥ २५ ॥

*

सोक्ता नमनिका यस्यां प्रयासेन विना नतिः ।
दुष्करेषु प्रयोगेषु नर्त्तक्यङ्गेषु दृश्यते ॥ ७२

॥ इति नमनिका ॥ २६ ॥

*

हस्तकैर्भ्रमरीभिश्च चारीभिः करणैरपि ।
वाद्यप्रबन्धवर्णानां समत्वेनैव नर्त्तकी ॥ ७३
कुर्यान्नृत्यमिदं प्रोचुर्नृत्याभिज्ञा विवर्तनम् ।

॥ इति विवर्तनम् ॥ २७ ॥

*

तदा मसृणता यत्र शृङ्गाररससंभृता ।
दृष्टिः प्रकाश(?श्य)ते नव्या नृत्यहस्तकसंयुता ॥ ७४

॥ इति मसृणता ॥ २८ ॥

*

विहसी स्यात् स्मितं वक्त्रं पद्मसौन्दर्यपेशलम् ।
॥ इति विहसी ॥ २९ ॥

*

सा गीतवाद्यता नृत्येन्नर्तकयनुगुणं यदा ॥ ७५
वर्णानां च लयस्यापि तथा च गीतवाद्ययोः ।
॥ इति गीतवाद्यता ॥ ३० ॥

*

यत्र विश्रम्य विश्रम्य लङ्घयन्ती मुहुर्मुहुः ॥ ७६
वाद्यस्यावयवान्नृत्ये नर्त्तकी तद्विलम्बितम् ।
॥ इति विलम्बितम् ॥ ३१ ॥

*

भावसंसूचकैरङ्गैर्नर्तकी यत्र नृत्यति ॥ ७७
यथावत् करणैरुक्तोऽभिनयो नयकोविदा ।
॥ इत्यभिनयः ॥ ३२ ॥

*

अङ्गं लास्याङ्गकं प्रोक्तं ताण्डवाङ्गमनङ्गकम् ॥ ७८
यत्र नृत्ये द्वयोर्योगस्तदङ्गानङ्गसंज्ञकम् ।
॥ इत्यङ्गानङ्गम् ॥ ३३ ॥

*

ज्ञेया कोमलिका यत्राङ्गानां स्याद्वलनादिभिः ॥ ७९
क्रियाभिश्चेतसो यत्र दृश्यते तु परार्द्रता ।
॥ इति कोमलिका ॥ ३४ ॥

*

लयेन चलनं यत्र लसल्लीलावतंसकौ ॥ ८०
चलत्वेनाचलत्वेन हावप्रचुरतायुतम् ।
यत्र कर्णौ प्रकुर्वाते तत्तूकं मुनयोऽवदन् ॥ ८१
॥ इति तूकम् ॥ ३५ ॥

*

शोभावलितसर्वाङ्गा नृत्यस्यावयवा यदा ।
पूर्वपूर्वमुपक्रान्ता वर्त्तेरनुत्तरोत्तरम् ।
तालप्रयोगचातुर्यात् स उयारो बुधैः स्मृतः ॥ ८२
॥ इति उयारः ॥ ३६ ॥

*

अन्या अपि भिदाः सन्ति देशीलास्याङ्गसंभवाः ।
न ता इहोपदिश्यन्ते यतः साध्याः स्वबुद्धिभिः ॥ ८३

यथा यथा भवेद्भक्तिः पश्यतां सचमत्कृतिः ।
तथा तथा विधातव्यं सङ्गीतमिति सङ्ग्रहः ॥ ८४

॥ इति देशीलास्याङ्गानि ॥

*

## [ नानागतिप्रचारनृत्यम् । ]

[1]अथ नानागतिप्रचारनृत्यम् । यथा चाह भगवान् श्रीभरताचार्यः–

तत्रोपवहनं कृत्वा भा[2]ण्डवाद्यपुरस्कृतम् ।
यथामार्गरसोपेतं[3] प्रकृतीनां प्रवेशने ॥ ८५
ध्रुवायां संप्रवृत्तायां पटे चैवापकर्षिते ।
कार्यः प्रवेशः पात्राणां नानार्थरससंभवः ॥ ८६

रङ्गे विकृष्टे भ[4]रतेन कार्यो
गतागतैः पादगतिप्रचारः ।
त्र्यस्त्रस्त्रिकोणे चतुरस्त्ररङ्गे
गतिप्रचारश्चतुरस्त्र एव ॥ ८७

ऋषय ऊचुः–

यदा[5] मनुष्या राजानस्तेषां देव[6]गतिः कथम् ।
अथोच्यते कथं नेया[7]गती राज्ञां भविष्यति ॥ ८८
इह प्रकृतयो दिव्या [तथा च[8] दिव्यमानुषी ।
मानुषी चेति विज्ञेया नाट्यनृत्तक्रियां प्रति ॥ ८९
देवानां प्रकृतिर्दिव्या राज्ञां वै दिव्यमानुषी ।
या त्वन्या लोकविदिता] मानुषी सा प्रकीर्त्तिता ॥ ९०
देवांशजास्तु राजानो वेदाध्याये सुकीर्त्तितम् ।
एवं देवानुकरणे दोषो ह्यत्र न विद्यते ॥ ९१
दूतीदर्शितमार्गस्तु प्रविशेद्रङ्गमण्डलम् ।
तस्याद्य[9](? स्माच्च) प्रकृतिं ज्ञात्वा भावं कार्यं च तत्त्वतः ।
गतिप्रचारं विभजेन्नानावस्थान्तरात्मकम् ॥ ९२

---

1 ABC अथ देशीनृत्यभेदाः । A has the same reading but there are marks of delition on it. 2 ABC ताण्ड° cf भाण्डवाद्यपुरस्कृतम् ना. शा. अ. १२ श्लो. २ (G. O. S.). 3 ABC °पेत प्र° cf यथामार्गरसोपेतं ibid. 4 ABC सुरतेन कार्यो । cf रङ्गे विकृष्टे भरतेन कार्यो । ना. शा. अ. १२ श्लो. २० (G. O. S.). 5 ABC यथा । cf अ. १२ श्लो. २५ । 6 ABC वेद° । cf यदा मनुष्या राजानस्तेषां देवगतिः कथम् । ना. शा. अ. १२ श्लो. २५ (G. O. S.). 7 ना. शा. नैषा । 8 inserted from ना. शा. अ. १२ श्लो. २५–२६. नि. सा. 9 तस्मात्तु । ना. शा. अ. १२ श्लो. १४२ (G. O. S.).

म्लेच्छानां [1]जातयो यास्तु पुलिन्दाद्या द्विजोत्तमाः ।
तेषां देशानुरूपेण कार्यं गतिविचेष्टितम् ॥ ९३
पक्षिणां श्वापदानां च पशूनां च द्विजोत्तमाः ।
स्वस्वजातिसमुत्थेन भावेन प्रतियोजयेत् ॥ ९४
सिंहर्क्षवानराणां च गतिः कार्या प्रयोक्तृभिः ।
या कृता नरसिंहेन विष्णुना [ प्रभविष्णुना ][2] ॥ ९५
आलीढं स्थानकं कृत्वा गात्रं तस्यैव चानुगम् ।
जानूपरि करं त्वेकमपरं चैव स्वस्थितम् ॥ ९६
अवलोक्य दिशः सर्वाश्चिबुकं बाहुमस्तके ।
गन्तव्यं विक्रमैर्विप्राः पञ्चतालान्तरोत्थितैः ॥ ९७
शेषाणामर्थयोगेन गतिं स्थानं प्र[ योज ]येत् ।
शेषं स्थानं प्रयोगेषु रङ्गावतरणेषु च ॥ ९८
एवमेते प्रयोक्तव्या नराणां गतयो बुधैः ।
नोक्ता याश्च मया ह्यत्र ग्राह्याश्चापि हि लोकतः ॥ ९९

*

अतः परं प्रवक्ष्यामि स्त्रीणां गतिविचेष्टितम् ।
स्त्रीस्थानकानि कार्याणि गतिष्वाभाषणेषु च ॥ १००
आयतं चावहित्थं च अश्वक्रान्तमथापि वा ।
स्थानकं तावदेव स्याद्यावच्चेष्टा प्रवर्त्तते ।
भग्नं च स्थानकं नृत्ये चारी च समुपस्थिता ॥ १०१
यो विधिः पुरुषाणां हि कार्यो नाट्यप्रयोक्तृभिः ।
स्त्री पुंसः प्रकृतिं कुर्यात् स्त्रीभावं पुरुषोऽपि वा ॥ १०२
धैर्यौदार्येण सत्त्वेन बुद्ध्या तद्वच्च कर्मणि ।
स्त्री पुंभावमभिनयैर्दिशेद् वाक्यविचेष्टितैः ॥ १०३
स्त्रीवेषचरितैर्युक्तः प्रेक्षिताप्रेक्षितैस्तथा ।
मृदुमन्तर्गतैश्चैव पुमान् स्त्रीनृत्तमाचरेत् ॥ १०४
गतिप्रका(?चा)रस्तु मयोदितोऽयं
नोक्तश्च योऽभ्यासवशेन साध्यः ।
अतः परं रङ्गपरिक्रमस्य
वक्ष्यामि कक्षान्तरसंविधानम् ॥ १०५

॥ इति नानागतिप्रचारनृत्यम् ॥

*

---

1 ABC जायते । cf म्लेच्छानां जातयो यास्तु । ना. शा. अ. १२ श्लो. १५१. (G. O. S.). 2 inserted from, ना. शा. अ. १२ श्लो. १५४. (G. O. S.).

[ देशीनृत्यभेदाः । ]

अथ देशीनृत्यभेदाः प्रदर्श्यन्तेऽत्र केचन ।
आतोद्यैर्वाद्यमानेषु यतिप्रहरणादिषु ।
रुद्रभक्ताः स्त्रियो यद्वा पुमांसः सौष्ठवान्विताः ॥ १०६
[1]रुद्राक्षवलया भस्मत्रिपुण्ड्राः शिवरूपिणः ।
कोणान् दक्षिणवामेन सर्पान् कांस्यादिनिर्मितान् ॥ १०७
बहुसङ्गमि(?भङ्गिम)नोहारि गायन्तः श्रेणिभिः शिवम् ।
कदाचित्सम्मुखीभूय लास्याङ्गैरुपबृंहितम् ।
यत्र नृत्यन्ति तत् प्रोक्तं शिवप्रियमिह स्फुटम् ॥ १०८

॥ इति शिवप्रियम् ॥ १ ॥

*

नर्त्तनं यन्मया प्रोक्तमासारिताभिधं[2] पथि ।
चारीभिर्मण्डलैश्चापि लास्याङ्गैरुपबृंहितैः ॥ १०९
देशीतालैश्च संयोज्य तच्चेदत्र प्रवर्त्यते ।
तदा रासकसंज्ञं स्यादिति नृत्यविदो विदुः ॥ ११०

[ ॥ इति रासकनृत्यम् ॥ २ ॥ ]

*

यत्र स्त्रीभिर्वसन्ततौ नृत्यतेऽभिनयात्मकम् ।
वसन्तरागसंबद्धैर्गीतैरौद्धत्यवर्जितम् ।
चरितैश्चित्रितं राज्ञस्तदुक्तं नाट्यरासकम् ॥ १११

[ ॥ इति नाट्यरासकम् ॥ ३ ]

*

यत्र राज्ञः पुरो नार्यश्चतस्रोऽष्टाथ षोडश ।
द्वात्रिंशद्वा चतुःषष्टिराधाय करपङ्कजैः ॥ ११२
दण्डौ सुवृत्तौ मसृणौ सुवर्णादिविनिर्मितौ ।
अरत्निसंमितौ दैर्घ्ये स्थौल्येनाङ्गुष्ठसंमितौ ॥ ११३
अथ देशानुरागेण गृहीत्वा दण्डचामरे ।
दण्डक्षौमाञ्चले यद्वा च्छुरिकादण्डकावथ ॥ ११४
चतुर्भिः पञ्चभिर्घातैर्यद्वा खड्ग( ?षड्क )प्रहारजैः ।
सशब्दं घातभेदैश्च युग्मीभूय वियुज्य च ॥ ११५
अग्रतः पृष्ठतो वापि पार्श्वसंगतयापि च ।

---

1 ABC °द्राख्य° । 2 ABC °तभिदांपथि cf ताभिधां पथि Kumbha in भ. को. पृ. ९२४.

घातभेदान् वितन्वन्त्यश्चारीभ्रमरिकादिभिः ॥ ११६
चित्रैः सव्यापसव्येन मुहुर्मण्डलसंस्थया ।
लयतालानुगं यत्र प्रनृत्यन्ति वराङ्गनाः ।
तदुक्तं नृत्यतत्त्वज्ञैर्दण्डरासकनर्तक( ? न )म् ॥ ११७

॥ इति दण्डरासकम् ॥ ४ ॥

*

द्विपद्या वर्णतालेन चर्चर्या वा मनोहरैः ।
सलास्यैर्गतिभेदैश्च मण्डलीभूय सर्वशः ॥ ११८
यत्र नार्यः प्रनृत्यन्ति प्राप्ते वासन्तिकोत्सवे ।
तालिकाभिरलं हृष्टा देशभूषाविभूषिता ।
तदुक्तं चर्चरीनृत्यं रसरागलयानुगम् ॥ ११९

॥ इति चर्चरीनृत्यम् ॥ ५ ॥

*

यत्र सौराष्ट्रदेशीया नार्यो नृत्यन्ति सुन्दरम् ।
तत्तद्देशीयभूषाढ्या सिचयान्तावगुण्ठिताः ॥ १२०
मृदङ्गहारसुभगा देशकाकुभिरञ्चितान् ।
रागेणेष्टेन गायन्त्यो दोहकान् रसनिर्भरान् ॥ १२१
चारीभिर्भ्रमरीभिश्च चरणैरुद्धतक्रियैः ।
ललितैः पदविन्यासैर्हस्तकैर्बहुभङ्गिभिः ।
यत्र तद्दोहकाख्यं स्यान्नर्तनं नर्तकप्रियम् ॥ १२२

॥ इति दोहकनृत्यम् ॥ ६ ॥

*

अन्येऽप्युत्प्रेक्षितुं शक्या भेदा देशीयनृत्यजाः ।
राजराजोपदेशेन स्वयमूह्या बुधैश्च ते ॥ १२३

॥ इति देशीनृत्यभेदाः ॥

*

## [ देशीनृत्यपरिभाषा । ]

केचित् सालगसूडस्य भेदमन्यं प्रचक्षते ।
ध्रुवो मण्ठो [1]रूपकं चाडुतालो[2] यतिरेव च ॥ १२४
प्रतितालस्तथा चैकतालीत्येवं स सप्तभिः ।
तत्र कल्पस्तथा तालग्रहन्यासाभिधानकौ ॥ १२५
यः पदादौ पदान्ते वा ह्यतीतः स्पर्शरञ्जितः ।
स कल्पो भण्यते विद्भिः पदाद्यन्यस्य च ग्रहः ॥ १२६

1 BC मूडूपकं । 2 ABC °तालौ ।

य उद्ग्राहादिधातूनां समाप्तिं ज्ञापयेदथ ।
तालताडनभेदोऽसौ ताल इत्यभिधीयते ॥ १२७
गीतादौ तु भवेत् कल्पस्तालः कल्पसमापने ।
मध्ये कलासो विज्ञेयः कैश्चिदेष विधिः स्मृतः ॥ १२८

॥ इति देशीनृत्यपरिभाषा ॥

*

## [ नृत्याङ्गानि । ]

श्रुतिर्गीतं कलासश्च तालश्चेति चतुष्टयम् ।
[1]इति देशीविदः प्राहुर्नृत्याङ्गानि समासतः ॥ १२९

॥ इति नृत्याङ्गचतुष्टयम् ॥

*

## [ देशीगीतनृत्यविधिः । ]

आलप्त्यादिविभेदेन देशीनृत्यविधिक्रमः ।
पृथक् प्रदर्शितः कैश्चित् स एवात्रोपदि[2]श्यते ॥ १३०
रङ्गप्रवेशे सञ्जाते पार्श्वयोश्चतुरः करान् ।
[3]अग्रत[ः] षोडश त्यक्त्वा नर्त्तक्या गायकैस्ततः ॥ १३१
आलप्तौ क्रियमाणायां नर्त्तकी वामपाणिना ।
धृत्वा चेलाञ्चलं दक्षे पताकं दधती करे ।
कलासैर्हावभावाभ्यां युतं भ्रमणमाचरेत् ॥ १३२

॥ इत्यालप्तिनृत्यम् ॥ १ ॥

*

अथानक्षरताले तु प्रवृत्ते गीतमानतः ।
संदंशं त्रिपताकाभ्यां नर्त्तकी नृत्यमाचरेत् ॥ १३३
ध्रुवनृत्ये यथौचित्यं षट् चत्वारोऽथ पञ्चधा ।
धातुद्वये द्वितालो स्यात् कलासो हस्तकस्तथा ॥ १३४
स्वेच्छयात्र प्रकर्तव्य इति गीतविदो विदुः ।
षडुक्ता मन्त(?ण्ठ)का येऽत्र त्रिताली तेषु संस्थिता[4] ॥ १३५

॥ इति मण्ठकनृत्यम् ॥ २ ॥

*

पताकाद्याः कपित्थान्ता रूपकेऽष्टकरा ध्रुवम् ।
ध्रुवे लयान् विलम्बादीनुद्ग्राहाभोगयोर्द्रुतः[5] ॥ १३६

॥ इति रूपकनृत्यम् ॥ ३ ॥

*

1 Kumbha in भ. को. (पृ. ८५४) drops this line. 2 ABC °द्दश्यते । 3 अग्रतः षोडशः पञ्च नर्तक्यो गायकैः सह । Kumbha in भ. को. ( पृ० ५७ ). 4 BC संभतिः । 5 ABC °गयोद्रु° ।

उद्ग्राहादिष्वड्डताले लयः कार्यो विलम्बितः।
विकल्पतः कलासाः स्युः खटकामुखपूर्वकाः।
सूचयन्ता हस्तका द्वित्राः कार्या सर्वे ध्रुवे पदे ॥ १३७

॥ इत्यड्डतालः ॥ ४ ॥

*

यतौ लयास्त्रयः प्रोक्ता हस्तकाः षोडश क्रमात्।
पद्मकोशादिदोलान्ताः,

॥ इति यतिनृत्यम् ॥ ५ ॥

*

प्रतिताले तु हस्तकाः ॥ १३८
कार्याः पुष्पपुटाद्यास्तु चतुरस्त्रावसानकाः।
द्रुतो लयोऽथ मध्यो वा,

॥ इति प्रतितालनृत्यम् ॥ ६ ॥

*

तथा स्यादेकतालिके ॥ १३९
उत्तानवञ्चिताद्यं तु,
नलिनीपद्मकोशकम्।
अथ(?व)साने विधायैतद्धस्तषोडशकं परम् ॥ १४०
संयुतैर्वियुतैर्वाथ करैर्नृत्यं समाचरेत्।
मध्ये मध्ये भ्रमरिकां गीतान्ते च प्रदक्षिणम् ॥ १४१
निसारुरासकं वाद्यास्तालाः स्वेच्छाकरः करः।
आलापोऽपि सहस्तः स्याल्लयो हस्तानुगः स्मृतः ॥ १४२
दूरे पादप्रचारः स्याद् झम्पायामिति तद्विदः।
डोम्बडे हस्तको ज्ञेयः स्वेच्छयानुलयास्त्रयः ॥ १४३
षट्स्वेतेषु च गीतेषु कलासः स्याद्विकल्पतः।
कल्पतालविधिर्ज्ञेयो मण्ठकस्येव सूरिभिः ॥ १४४

॥ इति देशीगीतनृत्यविधिः ॥

*

## [ नवरसाः । ]

अथ नवा(?व) [रसा] लिख्यन्ते।

जीयाद्विसदृशी काचिदपूर्वेव सरस्वती।
यस्यां समभवच्चित्रं काव्यरत्नाकरो महान् ॥ १४५
ननु कोऽयं रसो नाम पदार्थस्तद्विचार्यते।
रस्यते वा सहृदयैः स्वयं वा रस्यते रसः ॥ १४६

विभावैर्जनितो भावोऽनुभावैरनुबोधितः ।
व्यभिचारिभिरास्फीतो रस इत्यभिधीयते ॥ १४७
नटोऽनुकरणत्वेन भावुकः पात्रमुच्यते ।
सभ्यनायकयोस्तस्याश्रयत्वं मन्यते परे ॥ १४८
इति सर्वमिदं सम्यग् रमणीयतरं मतम् ।
एवं सति नृपेणोक्तो नृप एव रसाश्रयः ॥ १४९
एवं रसाश्रयं सम्यग् राजा सर्वरसाश्रयः ।
नाग्र(?अग्रे)स्फुरत्सर्वरसः[1] सम्यगेवं न्यरूपयत् ॥ १५०

अथ शृङ्गाररसः ।

शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः ॥ १५१

यथा चाह भगवान् भरताचार्यः सूत्रेण–

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः ।"

मन्ये गुणागुणविशेषविवेकदक्षः
शृङ्गारमेव सकलेषु रसेषु मुख्यम् ।
यत् स्वीयमर्धमु(?म)पहाय तनोर्बभार
तत्राद्रिराजतनयार्धममोच्यमीशः ॥ १५२
धर्मार्थकामाः सममेव सेव्या
इतीतिहासस्य च मूलमेषः ।
शृङ्गारनामा रस इत्यतोऽय-
मादौ मया लक्षणमुच्यतेऽस्य ॥ १५३
पुंनार्योश्चेष्टितं यच्च रत्युत्थं स्यात्परस्परम् ।
तदाहुः केऽपि शृङ्गारं केऽपि त्वपरथा जगुः ॥ १५४
सुखप्रायेष्टसंपन्न ऋतुमाल्यादिसेवकः[2] ।
पुरुषः प्रमदायुक्तः शृङ्गार इति संज्ञितः ॥ १५५
ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः ।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ॥ १५६
नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमा(?मो)दैश्च ।
मधुरैश्चाङ्गविकल्पैस्तस्याभिनयः प्रयोक्तव्यः ॥ १५७
संभोगे(?गो) विप्रलम्भेन विना न रतिकारकः ।
कषायिते हि वस्त्रादौ भूयान् रागो यतो भवेत् ॥ १५८

1 ABC सर्वसर्वरसः । 2 Verses 159–161 from. ना. शा. A-6. verses 46-48 ( N. S. ).

अथ देवादिविषयरतेरुदाहरणम्-

सत्यं सन्ति जगत्त्रयीपरिसरे ते ते मुदा(?)धीश्वरा-
स्तेषां संस्मृतिमात्रमत्र फलदं स्वर्गापवर्गादिनः।
अस्माकं तु यदादि चित्तफलके संकल्पकल्पद्रुमं
कुम्भस्वामिपदारविन्दमुदितं तेनैव सर्वाप्तयः॥ १५९

रूपसंपन्नमग्राम्यं प्रेमप्रायं प्रियंवदम्।
कुलीनमनुकूलं च कलत्रं केन लभ्यते॥ १६०
संपत्तौ च विपत्तौ च मरणे या न मुञ्चति।
स्वामीयातां(?स्वामिनं तत्)पतिप्रेम जायते पुण्यकारिणः॥ १६१
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः॥ १६२
निर्वेदोऽथ तथा ग्लानिशङ्कासूयामदश्रमाः।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः॥ १६३
व्रीडा चपलता हर्ष आवेगो जडता तथा।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च॥ १६४
सुप्तं विबोधोऽमर्षश्च अवहित्थमथोऽग्रता।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च।
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः॥ १६५

भावप्रगल्भा यथा-

न जाने संमुखायाते प्रियाणि वदति प्रिये।
सर्वाण्यङ्गानि [किं यान्ति][1] श्रोत्रतामुत नेत्रताम्॥ १६६

॥ इति शृङ्गारः॥ १॥

*

अथ हास्यः।

विपरीतालङ्कारैर्विकृताचाराभिधानवेषैश्च।
[वि]कृतैरङ्गविकारैर्हसतीति [रसः स्मृतो] हास्यः॥ १६७

तस्य ओष्ठनासाकपोलस्पन्दनदृष्टिव्याकोशाकुञ्चनस्वेदास्यराग-पार्श्वग्रहणादिभिरनुभावैरनुभवः (? भिनयः) प्रयोक्तव्यः।

स्मितमथ हसितं विहसितमुपहसितं चापहसितमतिहसितम्।
द्वौ द्वौ भेदौ स्यातामुत्तममध्याधम[2]प्रकृतौ॥ १६८

---

1 inserted from Amaruśataka verse 64. 2 ABC तां श्रममध्यामप्र° cf ना. शा. अ. ६. श्लो. ५२. । (G. O. S.).

विकृताचारैर्वाक्यैरङ्गविकारै[श्च] विकृतवेषैश्च ।
हासयति[1] जनं यस्मात् तस्माद् ज्ञेयो रसो हास्यः ॥ १६९

॥ इति हास्यः ॥ २ ॥

*

अथ करुणो रसः ।

इष्टवध[2]दर्शनाद्वा विप्रियवचनस्य संश्रयाद्वापि ।
एभिर्भावविशेषैः करुणरसो नाम संभवति ॥ १७०
सस्वनरुदितैर्मोहागमैश्च परिदेवितैरनेकैश्च ।
अभिनेयः करुणरसो [3]देहायासाभिघातैश्च ॥ १७१

॥ इति करुणो रसः ॥ ३ ॥

*

अथ रौद्ररसः ।

युद्धप्रहारपातनविकृतच्छेद[न]विदारणैश्चैव ।
एभिश्चार्थविशेषैरस्याभिनयः प्रयोक्तव्यः ॥ १७२

॥ इति रौद्ररसः ॥ ४ ॥

*

अथ वीरः ।

स्थितिधैर्यवीर्यगर्वैरुत्साहपराक्रमप्रभावैश्च ।
वाक्यैश्चाक्षेप[4]कृतैर्वीररसः सम्यगभिनेयः ॥ १७३
उत्साहाध्यवसायादविषादित्वादविस्मितान्मोहात् ।
विविधादर्थविशेषाद्वीररसो नाम संभवति ॥ १७४

॥ इति वीररसः ॥ ५ ॥

*

अथ भयानकः ।

विकृतरससत्त्वदर्शनसंग्रामारण्यशून्यगृहगमनात् ।
गुरुनृपयोरपराधात् कृतकश्च भयानको ज्ञेयः ॥ १७५
[5]गात्रमुखदृष्टिभेदैरूरुस्तम्भाभिवीक्षणोद्वेगैः[6] ।
सन्नमुखशोष[7]हृदयस्पन्दनरोमोद्गमैश्च भयम् ॥ १७६
एतत् स्वभावजं सत्त्वसमुत्थं तथैव कर्तव्यम् ।
[8]पुनरेभिरेव भावैः कृतकं मृदुचेष्टितैः कार्यम् ॥ १७७

---

1 ABC हासयन्ति । cf हासयति. ना. शा. अ. ६. श्लो. ५०. (G. O. S.) 2 ABC बन्धुद्° । 3 ABC मनुजैर्दे° । 4 ABC श्वापेक्ष° । 5 ABC मामुत्र° । 6 ABC °म्भा··· त्री···द्वे··· । 7 ABC शोष······स्प० । 8 ABC······भि······5-8 readings taken from. ना. शा. अ. ६. श्लो. ७०-७२. ( G. O. S. )

करचरणवेपथुगात्रस्तम्भसंकोचहृदयकम्पनेन ।
शुष्कौष्ठ[1]तालुकण्ठैर्भयानको नित्यमभिनेयः ॥ १७८

॥ इति भयानकः ॥ ६ ॥

*

अ[न]भिमतदर्शनेन गन्धरसस्पर्शशब्ददोषैश्च ।
उद्वेजनैश्च बहुभिर्बीभत्सो रसः सम्यगभिनेयः ॥ १७९
मुखनेत्रविकूणननासाप्रच्छादना[व]नमितास्यैः ।
अव्यक्तपाद[2]पतनैर्बीभत्सः[3] सम्यगभिनेयः ॥ १८०

॥ इति बीभत्सो रसः ॥ ७ ॥

*

अथाद्भुतो रसः ।
यस्त्वतिशयार्थयुक्तं वाक्यं[4] शिल्पं च कर्मरूपं च ।
तत् सर्वमद्भुतरसे विभावरूपं हि विज्ञेयम् ॥ १८१
स्पर्शग्रहोल्लुकसनैर्हाहाकारैश्च साधुवादैश्च ।
वेपथुगद्गदवचनैः स्वेदाद्यैरभिनयस्तस्य ॥ १८२

॥ इति अद्भुतो रसः ॥ ८ ॥

*

अथ शान्तो रसः ।
शमस्थायी भवेच्छान्तः सर्वत्र समदर्शनः ।
तच्च ज्ञानाद्गतो (? ते )च्छः स तमोरागपरिक्षयात् ॥ १८३
प्रत्यक्षभूमिश्रितयोपारूढत्वेन नर्त्तकः ।
लोकस्यैव स्वभावस्य वासनारूपभेदतः ॥ १८४
स्तम्भादिभिः प्रयोज्योऽत एवं शान्तरसात्मता ।
एतेषामनुभावास्तु ज्ञेया राजोपदेशतः ॥ १८५

॥ इति शान्तो रसः ॥ ९ ॥

*

श्यामः सितः कपोतश्च रक्तो गौरः सितस्तथा ।
नीलः पीतस्तथा शुक्लो रसवर्णाः क्रमादमी ॥ १८६
मूलं तु(?तौ)र्यत्रिकस्यास्य रसमिच्छन्ति तद्विदः ।
त्रिभिर्नटस्थैर्यो भावा(?वोऽ)नुभावव्यभिचारिभिः ।
दाभि(?विभावै)र्व्यज्यते स्थायी स याति रसतां सदा ॥ १८७
शृङ्गाराज्जायते हास्यः करुणो रौद्रसंभवः ।
अद्भुतो वीरसंभूतो बीभत्साच्च भयानकः ॥ १८८

1 ABC °ष्ठकण्ठता° । 2 ABC पा···प° । 3 ABC °त्सरसः । 4 ABC °कय°···ल्पं ।

परस्यानुरागेण शृङ्गारो जायते रसः ।
उक्तिप्रत्युक्तिभेदेन हास्यस्तत्रैव दृश्यते ॥ १८९
अत्याकुलतया बाला यदा रोदति मैथुने ।
करुणस्तत्र विज्ञेयो रौद्रो निष्ठुरताडनात् ॥ १९०
नखदन्तकराघातैर्वीरो धीरजनप्रियः ।
भयाद्बिन्दुनिपातस्य भयानकः स उच्यते ॥ १९१
लाला स्वेदः श्रमो मूर्च्छा बीभत्सो जायते रसः ।
अद्भुतोऽद्भुतसौख्यत्वात् शान्तो बिन्दुनिपा[त]नात् ॥ १९२

॥ इति नवरसाः ॥

॥ रसनृत्यं च ॥

*

यं प्रभुं नैकदेशीयनानानृत्यभिदाविदः ।
राजकन्या रञ्जयन्ति सदानन्दैकमन्दिरम् ॥ १९३

इति श्रीराजाधिराजश्रीकुम्भकर्णमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां नृत्यरत्नकोशे प्रकीर्णकोल्लासे लास्याङ्गपरीक्षणं तृतीयं [ समाप्तम् । ]

———०———

## चतुर्थोल्लासे चतुर्थं परीक्षणम् ।

### [ पात्रलक्षणम् । ]

पात्रस्य लक्षणं रेखा गुणा दोषाश्च मण्डनम् ।
लक्षणं संप्रदायस्य गुणदोषाश्च तस्य च ॥ १
विशुद्धा पद्धतिश्चात्र तथा श्रमविधिः[1] शुभः ।
गोण्डल्याश्च विधिः[2] सम्यक् पात्रलक्षणसंज्ञिते ।
परीक्षणे क्रमेणैव निरूप्यन्ते यथार्थतः ॥ २

नर्त्तनाश्रय इहोदितं विदा
पात्रमेतदुचितं तु नर्त्तकी ।
मुग्धमध्यभिदयोः प्रगल्भता
भेदतस्त्रिविधमत्र तत् स्मृतम् ॥ ३
यौवन(?नं) त्रितयलक्षणं क्रमात्
तस्य लक्षणमिहाभिधीयते ।
तेन तत्त्रितयमत्र लक्ष्यते
यन्निरूपित इहास्ति लक्षितम् ॥ ४
श्रीफलोपमकुचाधरलीला-
भृत् कपोलजघनोरुविभ्रमम् ।
प्रीतिपूर्वसुरतं प्रति तत् सो-
त्साहमत्र गदितं मयाऽऽदिमम् ॥ ५
पीवरोरुजघनं कठिनोच्चैः
पीनमूलघनसंभ्रमस्तनम् ।
मन्मथस्य मृतजीवनौषधं
यौवनं निगदितं द्वितीयकम् ॥ ६
तत्परं तु मदनोन्मदिष्णुता-
हेतुकं परमशोभयाऽन्वितम् ।
कामशिक्षितसुभावसंभृत-
प्रौढनैपुणरति तृतीयकम् ॥ ७
तुर्यमत्र गदितं तु कैश्चनो-
न्मन्दमन्मथरसं द्वितीयतः ।
म्लाल(?न)ताद्युपचिताङ्गसंभ्रमं
तत्प्रगल्भविभवोद्धताद(?दि)तः ॥ ८

---

1–2 ABC विधिं ।

पात्रमत्र गणितं न तूचितं
यज्ञराभिमुखमेतदीरितम् ।
शोभया च रहितं विदांगणै-
र्नाहृतं रतिपराङ्मुखं यतः ॥ ९
बालमप्यविदिताङ्गसंभ्रमं
तन्मनोविरहितं न संमतम् ।
यन्न रञ्जयितुमेतदर्हति
प्रायशो जनमनांसि संसदि ॥ १०

॥ इति पात्रलक्षणम् ॥

*

## [ रेखा । ]

या शिरोङ्घ्रिकरनेत्रपङ्कजा-
द्यङ्गमेलनविधौ सति स्फुटम् ।
के(?का)चिदत्र[च] दिश(?दृशा) मनोहरा
सा स्थितिर्निगदितात्र रेखिका ॥ ११

॥ इति रेखा ॥

*

## [ पात्रगुणाः । ]

सौष्ठवं विशदकान्तदन्तता
रूपसंपदमलातिविस्तरे ।
कर्णयोश्च लतिके विशालता
नेत्रयोरधरबिम्बचारुता ॥ १२
कम्बुसुन्दरसुकण्ठता लसत्-
पञ्चतालसमकान्तिबाहुता ।
मध्यदेशतनुता विशालता
स्यान्नितम्बफलकेऽतिपेशला ॥ १३
उच्चता न तु न खर्वता तथा
पीनता न न सिरालता तनौ ।
कान्तिमत्त्वमविचार्य धैर्यतौ-
दार्यता त्वतितरां प्रगल्भता ॥ १४
कोऽप्यसौ तरुणिमोद्गमः स्तनौ
कापि चारुकरभोरुतापि च ।

क्वापि वक्त्रकमलस्य माधुरी
स्वर्णरङ्गकृतभङ्गगौरता ॥ १५
श्यामतापि च चतुर्विधा पुनः
श्लिष्टसंधिसमता सुपार्ष्णिता[1] ।
मत्तदन्तिगमना मदालसा
चन्द्रजित्वरमुखी सुसंहता ॥ १६
कामबाण इव विश्वजित्वरं(?रः)
पात्रगो गुणगणोऽयमीरितः ।
कोमलैर्यदिह गात्रविभ्रम-
क्षेपकैर्विलसदग्र्यसल्लयैः ॥ १७
प्रोद्गिरत् किमु नु गीतवाद्ययो-
रक्षराणि सुघटैश्च सुतालैः ।
चाक्षुषत्वमिह चानयद् ध्वने-
र्गीतवाद्यजनितं निजाङ्गकैः ॥ १८
स्वीयगात्रनिचये सुपूर्णता-
मादधत् कुसुमसञ्चये यथा ।
नृत्यतीत्थमिदमुत्तमं वद-
त्युत्तमः सकलराजसंसदि ॥ १९

[॥ इति पात्रगुणाः ॥]

*

## [ पात्रदोषाः । ]

एतदुक्तगुणराशिसमस्त-
व्यस्तवर्गणविधेर्विपर्ययः ।
दोषराशिरुदितोऽत्र पात्रगो
दोषराशिरहितेन भूभृता ॥ २०

॥ इति पात्रदोषाः ॥

*

एतदर्थमिह नृत्यकोविदैः
कार्यमेव गुणदोषवीक्षणम् ।
यत्कृतेऽत्र किल जायते परा
नृत्यसंसदविचार(?पदपि चारी)सुन्दरा ॥

---

1 ABC put here इति पात्रगुणाः ।

यत् पुराणमुनिसंमतं त्विदं
नाट्यसिद्धिरखिला चरूप्यताः(?निरूपिता) ॥ २१
मार्कण्डेयपुराणोक्ता नृत्ते पात्रैकतन्त्रता ।
नृत्तेनालम(?मल)रूपेण सिद्धिर्नाट्यस्य रूपतः ।
चार्वधिष्ठानं यन्नृत्यमन्यद्विडम्बनेति च ॥ २२

[ ॥ इति गुणदोषपरीक्षा[1] ॥ ]

*

## [ पात्रमण्डनानि । ]

स्निग्धविस्तीर्णधम्मिल्लः सविलासनिवेशितः ।
लसत्कुसुमसंभारसंभृतः शुचिरुज्ज्वलः ।
ग्रन्थिर्विलुलितः स्कन्धे सौरभाकृष्टषट्पदः ॥ २३
विकाशिमल्लिकामोदिपुष्पपुष्प(?)दलिक्षिका ।
वेणी वा ललिता रत्नरचनागुम्फपेशला ॥ २४
हेमपट्टगता चित्रलेखेवाधिकशोभिनी ।
विभ्राजते पृष्ठदेशे लुण्ठती जनमोहिनी ॥ २५
मुक्ताजालमनोहारि कुन्तलैर्भूषितं शिरः ।
स्निग्धसिन्दूररुचिरो रतिसञ्चारमार्गवत् ।
मुक्तादामविभूषाढ्यः सीमन्तः स्निग्धसुन्दरः ॥ २६
विचित्रतिलको भालः कस्तूरीचन्दनादिना ।
कर्णयोः कामतूणीरतर्जकाववतंसकौ ॥ २७
मुक्तताटङ्कसुभगौ नीलेन्दीवरसुन्दरौ ।
तन्वञ्जने च नयने कुङ्कुमाद्यैर्विनिर्मिता ॥ २८
कपोलयोः पत्रभङ्गिरचना मदनप्रभोः ।
निवेशाय स्वस्तिकाली रत्येव विनिवेशिता ॥ २९
स्फुरद्रश्मिप्रभाजालै रदनावलिनिर्गतैः ।
अकस्माद्भासयन्तीव रङ्गभूमिं समन्ततः ॥ ३०
इयत् (? ईषत्) स्मितमनोहारी पद्मरागांशुपेशलः ।
ताम्बूलरागसुभगोऽधरो जनमनोहरः ॥ ३१
प्रभाप्राग्भारशोभाढ्यरत्नग्रैवेयकाञ्चिता ।
ग्रीवा कम्बुकृतत्रासा वासवेश्म मनोभुवः ॥ ३२

---

1 ABC put here इति पात्रदोषाः ।

कामलीलागृहप्रांशुसुवर्णवलयोज्ज्वलौ[1] ।
प्रोल्लसद्रत्नसंभिन्नमुद्रिकाभिरलङ्कृताः ॥ ३३
अङ्गुल्यो दश पञ्चेषुबाणाः किं द्विगुणीकृताः ।
चरणौ रत्नमञ्जीरहंसकध्वनिसुन्दरौ ॥ ३४
कर्पूरपूरकाशीरचन्दनैर्धूसरं वपुः ।
तत्तद्देशानुसारेण वस्त्रं कार्पासकं तनु ॥ ३५
क्षीरोदकादिकं चेति चेलं वा समकञ्चुकम् ।
मण्डितं मौक्तिकालीभिर्नानापक्षिकृताकृति ।
एतन्मण्डनमत्रोक्तमन्यद्वा रुचितोऽञ्चितम् ॥ ३६
श्यामगौरविभागेन यत्र यद्वर्णपोषकम् ।
देशकालवयोवर्णानुसारेण प्रकल्पयेत् ॥ ३७

॥ इति पात्रमण्डनानि ॥

*

## [ संप्रदायलक्षणम् । ]

यत्रैको मुखरी वरः प्रतिमुखी युक्तस्तथा द्वौ परौ
प्रोक्तावावजधारिणौ षडथवा मार्दङ्गिकाः शोभनाः ।
द्वात्रिंशद्गदितास्तथा च करटाधत्रो(?त्रौ)र्युगं च द्वयं
स्फूर्जत्तालभृतोर्द्वयं निगदितं तत् काहलीधारिणोः ॥ ३८
अष्टौ कांस्यजतालधारिण इह द्वौ वांशिकौ सुस्फुटौ
सुव्यक्तप्रचुरध्वनी च रसिकौ रक्तिप्रदौ शृण्वताम् ।
चत्वारो भुकरास्तयोर्मधुरसुध्वानास्तथा गायनौ
द्वौ मुख्यौ सह गायनैर्निगदितावष्टाभिरेतद्गतैः ॥ ३९
मुख्ये गायनिके तथाष्ट सह गायिन्यस्तयोः कीर्त्तिताः
पात्रं सर्वगुणान्वितं निगदितं त्वेकं समुल्लासकम् ।
तेषां सर्व इमे सुरूपविभवाः सद्भूषणालङ्कृता
गीतार्थे निपुणाश्च साम्यकरणे हर्षोल्लसचेतसः ॥ ४०
तस्मादुत्तम एष मे निगदितः सत्संप्रदायो जने
ख्यातः कुट्टिलसंज्ञयार्धगणितः स्यान्मध्यमोऽस्मात् पुनः ।
अस्यार्धेन मितः कनिष्ठ इति वै म्लेच्छान्तकेनामुना
राज्ञायं निरगादि राजनिवहप्रीत्यै चिरायास्तु सः ॥ ४१

॥ इति संप्रदायलक्षणम् ॥

*

---

1 Here a line mentioning प्रकोष्ठौ seems to be missing.

## [ संप्रदायगुणदोषौ । ]

चत्वारोऽथ गुणास्तु कुट्टिलगतास्तालानुवृत्तिर्लय-
स्तेषामप्यनुवृत्तिरामुखरिणस्तद्व्यूनवृत्तिः खरा ।
दोषाः स्युर्गुणप[र्य]येण निखिला वर्ज्यास्तु ये यत्ततः
संवीक्ष्य(?क्ष्यैव) च संप्रदायरचनां कुर्वन्तु राजाग्रतः ॥ ४२

॥ इति संप्रदायगुणदोषौ ॥

*

## [ शुद्धपद्धतिः । ]

भूमीन्द्रेऽखिलदानमानकुशले सिंहासनाधिष्ठिते
प्रेक्षार्थं समुपस्थिते बुधगणैः सङ्गीतविद्भिः समम् ।
पूर्णां रङ्गभुवं प्रविश्य निखिलै रङ्गोपहारैः समं
तिष्ठन्तोऽखिलरङ्गकार्यविदुराः सत्संप्रदायान्तराः ॥ ४३
वाद्यानां समतां विधाय सकलां नादस्य साम्यं तत-
स्तच्चित्ताः परिवादयेयुरतुलं मेलापकं तत्परम् ।
संपूर्णं गजरं ततो जवनिकामन्तःप्रसूनाञ्जलिं
धृत्वा पात्रमवाप्य सौष्ठवमथोऽधिष्ठाय सुस्थानकम् ॥ ४४
अन्तर्धानपटेऽपसारित इहारब्धे विधानादथो
खण्डे चोपशमाह्वये जनमनांस्येकाग्रतामानयन् ।
पात्रं रङ्गभुवं विशेदथ समन्ताद्वाद्यमाने समं
खण्डे चोपशमाख्यके सविधिना पुष्पाञ्जलिं मध्यतः ॥ ४५
पात्रं मुञ्चति रङ्गपीठधरणौ यस्मात् सुरग्रामणी-
र्मध्येरङ्गमधिष्ठितः स्वयमसौ तं पूजनायोचितम् ।
तस्मात् [1]संमदसंभृतं त्वविकलैर्नृत्याङ्गकैः केवलै-
र्वाद्येनोपशमेन नृत्यति परं पात्रं मनःसंयुतम् ॥ ४६
[ मो ] तावत्सरिगोणिकाश्च[2] तुडिकाः स्यात्तत्पदं तत्परम्
साङ्गन्तं मलपं तथा च कवितं वाद्यप्रबन्धैरिमैः ।
पर्यायेण च वा क्रमाद् बहिरथो स्वेच्छाकृते वादने
सामस्त्येन लयाश्रितैश्च विषमैर्नृत्याङ्गकैर्नर्त्तनम् ॥ ४७

---

1 Kumbha in भ. को. gives only तस्मात् समद to मनः संयुतम् and drops पात्रं to °योचितम् । p. 881. 2 Kumbha in भ. को. gives the reading तावत् संकुलगोपिकाश्च तुडिका etc. p. 881. We have adopted **'मोता'** from सं. र. अ. ७. श्लो. १२६६. पदमोता च कवितं etc.

शुद्धैश्चाप्यथ रूपकै रुचिवशात्तैर्गीयमानैश्चिरं
पात्रं नैकविधं विधाय निपुणं नृत्यं ततः संत्यजेत् ।
रङ्गे यत्र न वादयन्ति गजरान् पश्चाच्च ते वादकाः
खण्डं तूपशमाभिधं खलु तदा पात्रं पदे प्राविशेत् ॥ ४८
उक्तेत्थं किल पद्धतिः परिपडिर्या प्रोच्यते तद्विदां
वृन्दैः साखिलराजराजिमुकुटालङ्कारहीरेण हि ।
वाद्यं चासमहस्तमत्र निगदन्त्येके प्रवेशात् पुरः
पाटैर्वा समहस्तकादिभिरिह स्यात् सर्वतोऽथेष्टतः ॥ ४९
स्थानं वा समपादमत्र निगदन्त्येके प्रवेशे बुधाः
केचित् केवलयोः प्रयोगमभणन् तं गीतवाद्यानुगम् ।
गीतादेरिह वाञ्छितैः परमसावेकैकशः कैश्चने-
त्येवं पद्धतिरीरिता सुविमला शुद्धा त्रिधा भूभृता ॥ ५०

॥ इति शुद्धपद्धतिः ॥

*

## [ गौण्डलीविधिः । ]

गीतैः सालगसूडैश्च[डस्थैः] प्रबन्धैश्च ध्रुवादिभिः ।
लास्याङ्गैः केवलैरेव तथाङ्गैरपि कोमलैः ॥ ५१
वाद्यप्रबन्धैः कठिनैः शुद्धैरेलादिभिर्विना ।
स्वयं नृत्यति यत्पात्रं स्वयं गायति च स्फुटम् ।
वादयेत् त्रिवलीं वाद्यं स्वयं तद्गौण्डलीं विदुः ॥ ५२
स्कन्धदेशे स्त्रिया वाद्यं ग्राम्यतासूचकं यतः ।
अतोऽस्य वादनं केचित् तद्विदो नैव मन्वते ।
गायेच्छारीरबुद्ध्या सा मूकत्वस्य जिहीर्षया ॥ ५३
कर्णाटदेशसंभूतं तस्या मण्डनमिष्यते ।
आश्रित्य गौण्डलीलक्ष्म तन्नर्त्तनमिहोदितम् ।
अत्र या पद्धतिः प्रोक्ता सैवोक्ता गौण्डलीविधिः ॥ ५४
देशी पद्धतिरेवेयं प्रोच्यते तत्क्रमोऽधुना ।
कर्णाटालङ्कृतियुताः स्युरस्मिन् सांप्रदायिकाः ॥ ५५
आतोद्यजातमत्रापि समनादं स्मृतं बुधैः ।
एकताल्या वादयेयुरथ मेलापकं ततः ॥ ५६
येन केनापि तालेन गजरे वादिते सति ।

निःसारुणा वैकताल्योपशमेऽस्य प्रचारिते ।
प्रविश्य रङ्गं तन्मध्ये पत्रं पुष्पाञ्जलिं क्षिपेत् ॥ ५७
अङ्गान्याविष्कुर्वदिव पुरो दक्षिणवामयोः ।
गजरोपशमेनैव नृत्येदविकलं ततः ॥ ५८
अड्डुतालं च निःसारु तथा चैकतालिकम् ।
रिगोणीसंश्रिता या तु तथा सर्वाङ्गनर्त्तनम् ॥ ५९
कृत्वा ततः क्रमात्तालनियमेन विना कृतौ ।
अवश्यकवितौ ताभ्यां क्रमान्नर्तनमारभेत् ॥ ६०
ततश्चोटवणोपेतरिगोण्या चित्रनर्तनम् ।
निवारितेषु वाद्येषु सह गायनसंयुतैः ॥ ६१
वांशिकैरवकाशे च वितीर्णे सं( ? स)ति गोण्डली ।
उच्चार्य स्थायिनं कुर्यात् रागालप्तिं चतुर्विधाम् ॥ ६२
काचिद्रा( ? द्वा ) गायिनी मुख्यालप्तिं नानाविधामिह ।
कुर्यान्मण्ठेन तालेन प्रतिमण्ठेन वा पुनः ॥ ६३
अन्येन केनचिद्वापि ध्रुवकं सकलं युतम् ।
गीत्वा तु वाद्यमानायां ढक्कायां मानसंयुतम् ॥ ६४
श्लक्ष्णा ध्रुवाख्यखण्डेन चित्तव्यक्तिमनोहरम् ।
नर्त्तनं मेलकोपेतं विदध्याद्गायकैः समम् ॥ ६५
अथानयोरुपरमे विहिते गानवाद्ययोः ।
स्थायान् विधाय विविधान् मुहुर्ध्रुवपदं व्रजेत् ॥ ६६
पूर्वमेव विधायाथ स्थायान् रक्तिसमन्वितान् ।
नातीव ह्रस्वदीर्घांश्च गमकप्रौढिपेशलान् ॥ ६७
प्रान्ततः प्रोल्लसत्तालान् ध्रुवखण्डे कलासयेत् ।
कलासे वादकाः कुर्युः सममातोद्यवादनम् ॥ ६८
विलीनमिव तत्पात्रं कलासे तत्र जायते ।
चित्रं चित्रार्पितमिव प्रेक्षकैरुपलभ्यते ॥ ६९
नृत्यस्य प्रक्रियां कृत्वा ह्यनेन विधिना पुनः ।
पूर्ववद् ध्रुवकाभोगखण्डे गायनसत्तमैः ॥ ७०
गीयमाने वाद्यमाने वादकैस्तद्वदेव च ।
खण्डे प्रहरणाख्ये च पुनर्नृत्यं यदृच्छया ॥ ७१
किञ्चित् कृत्वाथ च त्यागे सति संनिहिते पुनः ।
विचित्रप्रौढचारीभिः पात्रं नृत्यं समाचरेत् ॥ ७२

अत्र वाद्यं प्रहरणमाभोगेऽपि च तन्मतम् ।
वाद्यसाम्येन च त्यागं कृत्वा विश्रान्तिमाचरेत् ॥ ७३
ध्रुवेणैवं विधायाथ विधिवन्नर्त्तनं तथा ।
ध्रुववद् मण्ठकाद्यैश्च प्रारभेन्नर्तनं सुधीः ॥ ७४
परं तेषु विशेषो यः सोऽत्र सम्यग् निरूप्यते ।
ध्रुवखण्डनमण्ठादेः केवलं नर्त्तनं स्मृतम् ॥ ७५
प्रारम्भे मण्ठतालेन मण्ठो नर्त्तनमाचरेत् ।
ततः क्रमादेकताल्या मण्ठके नर्त्तनं भवेत् ॥ ७६
प्रतिमण्ठादिषु प्रोक्तं स्वतालेनैव नर्त्तनम् ।
प्रायः सालगसूडस्थे गीतं कुर्याद्द्रुते लये ॥ ७७
ताण्डवे पण्डितैरुक्तो लयः प्रायो विलम्बितः ।
नर्त्तित्वा सालगे सूडे त्वेकताल्यन्तरूपकैः ।
त्यागो[1] यत्र भवेदेष विज्ञेयो गौण्डलीविधिः ॥ ७८

॥ इति गौण्डलीविधिः ॥

*

## [ श्रमविधिः । ]

नमस्कृत्य गणाधीशं तथा देवीं सरस्वतीम् ।
ब्रह्मविष्णुमहेशांश्च रङ्गदैवतकैः सह ॥ ७९
क्रमात्तालं वाद्यभाण्डमुपाध्यायं तथा पुनः ।
नृत्तकन्याः स्तम्भयुग्मं दण्डिकां च प्रपूजयेत् ॥ ८०
चन्दनागरुकर्पूरमृगनाभिमुखैः शुभैः ।
विलेपनैश्च सामोदैः सौरभ्येण मनोहरैः ॥ ८१
पुष्पैश्च विविधैर्धूपैरारात्रिकसमन्वितैः ।
नानाविधैश्च नैवेद्यैर्वस्त्रैर्वर्णविभूषितैः ॥ ८२
बलिपूजोपहारैश्च प्रार्चयेद्रङ्गदेवताः ।
ततः शुभे मुहूर्त्ते च प्रारभेत श्रमं सुधीः ॥ ८३
कन्यां हृदयदघ्नां च दण्डिकां तिर्यगायताम् ।
स्तम्भद्वयोपरि स्थाप्यां हस्तग्राह्यां सुयन्त्रिताम् ॥ ८४
अवलम्बाय तस्याश्च दृढां श्लक्ष्णां समां तथा ।
ततोवाच(?तश्चाल)यित्वा चलनं शुभ्रमादाय कञ्चुकम् ॥ ८५

---

1 C °गे ।

इदं तामवलम्ब्याथोऽभ्यस्येदङ्गविवर्त्तनाः।
भूत्वा च सुमनाः कन्या शिक्षाभ्यासपरायणा॥ ८६
पूर्वोक्तमङ्गनिचयं लास्याङ्गान्यखिलान्यपि।
स्थापनं चलनं रेखां तालसाम्यं लयानपि।
गीतवाद्यानुगमनं शिक्षि(? क्षे)तानुदिनं शुचिः॥ ८७

॥ इति श्रमविधिः ॥

*

येन स्वैः करणैर्दिगन्तरनृपाः स्वे पूर्वजास्तैर्नव-
प्रोदञ्चच्चरणैरनुद्धतकरैः संतर्पणात्तीर्थिकाः।
शुभ्रैस्तैः परमङ्गहारनिचयैरुल्लासिताः स्वे[1] सभो-
द्देशास्तेन नृपेण नृत्यनिगमस्योल्लास उल्लासितः॥ ८८

*

इति श्रीसरस्वतीरससमुद्भूतकैरवोद्याननायकेन अभिनवभरताचार्येण मालवाम्भोधिमाथमन्थमहीधरेण योगिनीप्रसादासादितयोगिनीपुरेण मण्डलदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण अजयजयाजेयविभवेन यवनकुलाकालकालरात्रिरूपेण शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीतोषितशाकम्भरीप्रमुखशक्तित्रयेण नागपुरोद्धूलनप्रचं[ड]धर्षितनागपुरेण श्रीमत्कुंभलमेरुनवीननिर्मितसुमेरुणा श्रीमच्चित्रकूटभौमस्वर्गतायथार्थीकरणचारुतरपथेन मेदपाटसमुद्रसंभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन प्ररूढपत्रयवनदवदहनदवानलेन प्रत्यर्थिपृथिवीपतितिमिरततिनिराकरणप्रौढप्रतापमार्त्तण्डेन वैरिवनितावैधव्यदीक्षादानदक्षोद्दण्डकोदण्डदण्डमण्डिताखण्डभुजादण्डेन भूमण्डलाखण्डलेन श्रीचित्रकूटविभुना अध्युष्टतमनरेश्वरेण गजनरतुरगाधीशराजत्रितयतोडरमल्लेन वेदमार्गस्थापनचतुराननेन याचककल्पद्रुमेण वसुंधरोद्धरणादिवराहेण परमभागवतेन जगदीश्वरीचरणकिङ्करेण भवानीपतिप्रसादाप्तापसादवरप्रसादेन रायंगुरुचायंगुरुसेलगुरुवां[2]गगलांशयाचायुहयनेयु(?)स्त(? स्तु)त्यादिबिरुदावलीविराजमानेन राजाधिराजमहाराणाश्रीमोकलेन्द्रनन्दनेन राजाधिराजश्रीकुम्भकर्णमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां नृत्यरत्नकोशे प्रकीर्णकोल्लासे पात्रलक्षणं नाम चतुर्थं परीक्षणम्॥ उल्लासश्च समाप्तिं समगादिति विततमतीनामभिमतसिद्धिरस्तु[3]॥

॥ इति नृत्यरत्नकोशे प्रकीर्णकोल्लासे चतुर्थं परीक्षणं समाप्तम्॥

## ॥ समाप्तश्चायं चतुर्थोल्लासः ॥

---

1 AB स्ते। 2 B drops °वा°। 3 B श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां संगीतराजनृत्यरत्नकोशपुस्तकम्।

NOTE—In ms. c there is an entirely different and a very long praśasti about the autheor of this work. It is given below:-

इति निःशंकनिर्भयमल्लेन ॥ १ ॥ सकलभूवलयैकवीरेण ॥ २ ॥ कलाकल्याणकुशले[न]श्रीकालसेनेन ॥ ३ ॥ द्वादशसहस्रजनस्थानप्रभृतिवसुन्धरासमुद्धरणैकधीरेण ॥ ४ ॥ श्रीजगदीशवनदेवनिजगणेन ॥ ५ ॥ श्रीकामेश्वरीचरणकिङ्करेण ॥ ६ ॥ श्रीब्रह्माद्रिविभुना ॥ ७ ॥ प्रथमप्रख्याततामराजआमोदराजरामराजपैंकराजम्हामराजतामराजेन्द्रप्रभृतिसकलमहीपालमौलिमाणिक्यरचितासिंहासनादिसमस्तप्रशस्तराजचिह्नाधिष्ठातृनरेश्वरेण ॥ ८ ॥ अगस्तिपुरनिरस्तसमस्तवैरिवर्गेण ॥ ९ ॥ कामाक्षाप्रसादासादितकुन्तीपुरेण ॥ १० ॥ शुद्धोद्धतोद्धतपति निपातपटुतरतरवारिधारेण ॥ ११ ॥ उद्धतपुरीनारीनयननीरनिरन्तसारिणीसमाप्यायितशौर्यतरुवरेण ॥ १२ ॥ श्रीभीष्मपुरजयानीतानेकराजकन्यारत्नेन ॥ १३ ॥ मणिपुरमर्दनादर्शितशौर्येण ॥ १४ ॥ कल्याणपुरजयाजितजामदग्न्येन ॥ १५ ॥ स्थानवलयितानेकदरीपरिसरपरित्रासितमनीरवीरेण ॥ १६ ॥ श्रीपुरग्रहणसंवर्द्धितयशोभरेण ॥ १७ ॥ वाटिकाचलग्रहणजनितकीर्त्तिपुरपराजिताचलनायकेन ॥ १८ ॥ [मदनपुर]विध्वंसनचारुचापरचितेन ॥ १९ ॥ सुवर्णगिरिखण्डनावनिवज्रहस्तेन ॥ २० ॥ नवसारीघनदेवीयुवतीजनवदनयामिनी[ नाथ ]-सिंहिकासुतमानकरालवालेन ॥ २१ ॥ पाटलीरणधरणिधीरधनुर्धेङ्कारमुखरितत्रिभुवनेन ॥ २२ ॥ तारापुरप्रज्वालनसमुद्भूतधूममलिनीकृतसकलवैरिवदनेन ॥ २३ ॥ कुङ्कुमपुरजयदर्शितसिंहविक्रमेण ॥ २४ ॥ संज्ञापुरोपार्जितरत्नेन ॥ २५ ॥ वेदिकागिरिनिर्दलनदारुणेन ॥ २६ ॥ कुरङ्गगिरिकोटविघट्टनलम्पटोरुनाशीरेण ॥ २७ ॥ पुण्यस्तम्भोद्धूलनोद्भूताद्भुतशौर्येण ॥ २८ ॥ संगमनीरदुर्गोद्धरणोद्भृतसकलमण्डलाधीश्वरेण ॥ २९ ॥ शुक्रपुरसमूलोन्मूलनप्राप्तजयश्रिया ॥ ३० ॥ गिरिपुरडुंगरग्रहणसार्थकीकृतोग्राग्रहेण ग्रहेण ॥ ३१ ॥ दमनपुरविध्वंसनवन्दीकृत्ययवनीनिचयेन ॥ ३२ ॥ आमर्दकगिरिशिखरो[ परि ]परिभावितशकनिकरेण ॥ ३३ ॥ महिषमेरुजयाजेयविभवेन ॥ ३४ ॥ शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण ॥ ३५ ॥ निजभुजशौर्यवशीकृतबग्गुलराजप्रमुखमहानिधानेन ॥ ३६ ॥ बेडुरभूपालराजकृतसंस्थापनेन ॥ ३७ ॥ नराणरणकर्मकर्मठेन ॥ ३८ ॥ तुजारषा(खा)नमानमर्दनगृहीतराज्यलक्ष्मीसकलभाण्डागारनिचयेन ॥ ३९ ॥ अलङ्गगिरिगहनगह्वरकुहरविहारिवैरिवीरसिन्धुरमर्दननिर्दयकण्ठीरवेण ॥ ४० ॥ अष्टादशगिरिशिखरपरिवारिताञ्जनाद्रिविजयविख्यातवीर्यगर्वेण ॥ ४१ ॥ सप्तविंशतिसहस्रमहाराष्ट्रधराविधूननप्रलम्बप्रभञ्जनेन ॥ ४२ ॥ सप्ततिसहस्रगूर्जराम्भोधिमाथमन्थमहीधरेण ॥ ४३ ॥ महदम्बमातृकापुरोद्धूलनधर्षिता( ? त )महोरगपुरेण ॥ ४४ ॥ पलायमानअजीमषा-(खा)नसकलगृहीतजयश्रिया ॥ ४५ ॥ जाङ्गलस्थलजलधितरत्तुङ्गतरङ्गसंरंभकुम्भसंभवेन ॥ ४६ ॥ वस्तिसोपारकलहकलितकुन्तजनितकुन्दावदातकीर्त्तिधवलितदिगन्तरेण ॥ ४७ ॥ शशकगिरिलुण्ठनपटुतरेण ॥ ४८ ॥ श्रीवनदेवस्वामिप्र( ? प्रा )सादरचनापरपरमेश्वरेण ॥ ४९ ॥ त्रियम्बकेश्वरसन्निधिकीर्त्तिस्तंभोन्नतजयस्तम्भेन ॥ ५० ॥

श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचितचारुपथेन ॥ ५१ ॥ श्रीकामाक्षागिरिनवीननिर्मितिपराजितसुमेरुणा ॥ ५२ ॥ श्रीमहिषाचलोपरिश्रीहरिशरणरचिताचलदुर्गेण ॥ ५३ ॥ रायंगुरु चायंगुरु सेलगुरु रायांचापरगुरु वागाङ्गलारायांचामुहवनरायहिंसक्करायमाचलपूर्वपश्चिमउत्तरदक्षिणचतुर्दिशां रायांचा–आंबुला–इत्यादि–बिरुदावलीविराजमानेन ॥ ५४ ॥ अध्युष्टतमनरेश्वरेण ॥ ५५ ॥ सबलराजस[मू]न्मूलनाचार्येण ॥ ५६ ॥ दुर्बलराजसंस्थापनाचार्येण ॥ ५७ ॥ पितृवैरसमुद्भूतरोषपोषणमहीपतिमत्तमातङ्गमस्तकाङ्कुशेन ॥ ५८ ॥ अभिनवभार्गवेण ॥ ५९ ॥ राजभुजबलभीमेन ॥ ६० ॥ हिन्दूकराजगजपतिना ॥ ६१ ॥ आसनसिंहासनसितातपत्रमाणिक्यमालामण्डितवातान्दोलितजयपताकाकनकदण्डचन्द्रावदातचलचामरयुगलमकरध्वजादिराजराजालङ्करणावलोकनमत्सरितमानसेतरनृपालमौलिनिहितवामचरणेन ॥६२॥ नलनहुषधुंधुमारभरतभगीरथमान्धातृमेधातिथिप्रभृतिचिरराजरत्नोदात्तचरितेन ॥ ६३ ॥ वेदमार्गस्थापनचतुराननेन ॥ ६४ ॥ सर्वदात्र्यम्बकादिगोदाविमुक्तिसमस्तामुक्तिप्रवितीर्णमुक्तमुक्ताकलापेन ॥ ६५ ॥ श्रीब्रह्मगिरिसन्निधिकृतयुगधर्मानुवृत्तिब्रह्मवृन्दाधिष्ठितानेकयज्ञाद्यखिलसुकृतकृत्यसत्यलोकेन ॥ ६६ ॥ परमभागवतेन ॥ ६७ ॥ अभिनवभरताचार्येण ॥ ६८ ॥ सङ्गीतमीमांसानिर्माणापरप्रभाकरेण ॥ ६९ ॥ प्रबन्धराजश्रीगीतगोविन्दनिर्माणपरितोषितराधामाधवेन ॥ ७० ॥ कामाक्षास्तुतिकरणाराधितकामेश्वरीचरणकमलेन ॥ ७१ ॥ श्रीगीतगोविन्दटीकारचनवर्णितसाङ्गशृङ्गाररसेन ॥ ७२ ॥ सकलराजवाग्गेयकारतोडरमल्लेन ॥ ७३ ॥ सकलकविराजचक्रचूडामणिना ॥ ७४ ॥ बीणावादनप्रवीणेन ॥ ७५ ॥ सुशारीरशालिना ॥ ७६ ॥ पत्तनगरजनस्थानगोदावरीविराजमानम्लेच्छोच्छेदितचिरकालधर्मसंस्थापनेन ॥ ७७ ॥ संस्कृतभाषामहाराष्ट्रभाषातैलिङ्गकर्णाटभाषाचतुष्टयविरचितनाटकराजचतुष्टयेन ॥ ७८ ॥ याचकजनकल्पनाकल्पद्रुमेण ॥ ७९ ॥ वसन्तसमयसमागतसमस्तसामन्तसीमन्तिनीशिरोमणिसीमन्तसिन्दूरपूरदूरोद्धूलनप्रकटितप्रौढप्रतापेन ॥ ८० ॥ निसर्गदुर्ग्रहदुर्गवर्गदुर्गमप्र(? प्रा)कारपरिखापरिपातपरिखिद्यमानपरिशङ्कितपरिजनपरिवीतप्रत्यर्थिनितम्बिनीलुंटाकार्गलादीर्घभुजायुगलेन ॥ ८१ ॥ धीरोदात्तधीरशान्तधीरोद्धतधीरललितचतुर्विधनायकगुणग्रामविचारचातुरीचतुराननेन ॥ ८२ ॥ अष्टविधनायिकाहावभावविवेकोद्दामोद्दीपितस्मरविलोकनानुभूयमानशृङ्गाररससान्तरनिरन्तरान्तरानन्देन ॥ ८३ ॥ नाटकनाटिकाख्यायिकाप्रलेहि(? हेलि)काकलाकलापकौशल्येन ॥ ८४ ॥ भारतीयरसदृष्टिभावदृष्टिभावितभावनाभिनवभरताचार्येण ॥ ८५ ॥ नन्दिकेश्वरमतानुवर्तनाराधितत्रिनयनेन ॥ ८६ ॥ परमपराक्रमार्जुनेनाथ बृहन्नटेन ॥ ८७ ॥ सतताराधितधर्मेणाथ वृकोदरेण ॥ ८८ ॥ श्रीसरस्वतीरससमुद्भूतकैरवोद्याननायकेन ॥ ८९ ॥ यवनकुलाकालकालरात्रिरूपेण ॥ ९० ॥ सततपराभूतसूर्यवंशीन्द्रसेनराजराज्यसंस्थापनदृढाङ्गीकारेण ॥ ९१ ॥ गूर्जरधराधीशमहमदसुलताणधीरत्वोन्मूलनप्रचण्डपवनेन ॥ ९२ ॥ त्रिसंध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन ॥ ९३ ॥ अरिराजमत्तमातङ्गपञ्चाननेन ॥ ९४ ॥ प्ररूढपत्रयवनदवदहनदावानलेन ॥ ९५ ॥ प्रत्यर्थिपृथिवीपतितिमिरततिनिराकरणप्रौढप्रतापमार्तण्डेन ॥ ९६ ॥ वैरिवनितावैधव्यदीक्षादानदक्षोद्दण्डकोदण्डमण्डिता-

खण्डभुजादण्डयुगलेन ॥ ९७ ॥ भूमण्डलाखण्डलेन ॥ ९८ ॥ गजनरतुरगाधीशराजत्रितयतोडरमल्लेन ॥ ९९ ॥ वसुन्धरोद्धरणादिवराहेण ॥ १०० ॥ भवानीपतिप्रसादाप्तापसादवरप्रसादेन ॥ १०१ ॥ अनन्यमल्लीकगर्वखण्डनमुशलहस्तबलभद्रपराक्रमेण ॥ १०२ ॥ महाराजाधिराजमहाराणाश्रीमृगाङ्कतामराजेन्द्रनन्दनेन ॥ १०३ ॥ श्रीमहाराज्ञीश्रीसौभाग्यवतीजसमाम्बिकाहृदयनन्दनेन ॥ १०४ ॥ विविधविज्ञानविज्ञचमत्कारिचातुरीधुरीणसकलसीमन्तिनीशिरोमणिरूपलावण्यलज्जालक्ष्मीनिधानशृङ्गारसरसीशतराजकन्याप्रवरनिकुंभराजन्यवंशावतंसमहाराज्ञी-श्रीकर्मवतीलषुमादेवीहृदयाधिनाथेन ॥ १०५ ॥ श्रीमहाराजाधिराजकालसेन-महीमहेन्द्रेण विरचिते सङ्गीतराजे षोडशसाहस्र्यां सङ्गीतमीमांसायां नृत्यरत्नकोशे प्रकीर्णकोल्लासे पात्रलक्षणं नाम चतुर्थं परीक्षणं नृत्यरत्नकोशश्चतुर्थः समाप्तिं समागादिति विततमतीनामभिमतसिद्धिरस्तु ॥ शुभं भवतु ॥ श्रीरस्तु ॥

## ॥ इति नृत्यरत्नकोशः समाप्तः ॥

* *
*

# परिशिष्ट

## श्लोकानुक्रमणिका

# परिशिष्ट २

## पारिभाषिक - शब्दानुक्रमः

# परिशिष्ट ३

## ग्रन्थकारेण निर्दिष्टानां ग्रन्थानां ग्रन्थकृतां चाकाराद्यनुक्रमणी

## BIBLIOGRAPHY


Akbar the Great Mugal (1542–1605) by Vincent A. Smith, C.I.E. Second Edition, Revised Indian Reprint, 1958 S. Chand & Co. Delhi.

The Arvindu Dynasty of Vijayanagar by Rev. Heras. Paul & Co. Publishers, Madras, 1927.

Bombay Gazetteer Vol. I parts I & II Vol. XII, Vol. XVI.

The Cambridge History of India Vol. III.

A Collection of Prakrit and Sanskrit Inscriptions published by the Bhavanagar Archaeological Department, Bhavanagar.

Ferishta Vol. IV.

Fine Art in India and Ceylon by Vincent Smith, second edition, Oxford, 1930.

Geographical Dictionary of Ancient & Medieval India by Nandlal De.

History of Gujarat (1297–1573) by Commissariat.

History of Indian and Eastern Architecture Vol. II by James Fergusson, London 1910.

History of Orissa Vol. I by R.D. Banerji, Calcutta 1930.

History of Rajputana Vols. I & II by Gaurishankar Ojha, Ajmer 1932

History of the rise of the Mahomedan Power in India, till the year A.D. 1612. (Translated from the original Persian of Mahomed Kasim Ferishta by John Briggs, M.R. A.S. Vol. IV Calcutta, 1916

Imperial Gazetteer of India, Mahbūb bād to Morādābād Vol. XVII New edition Oxford, 1908.

Indian Antiquary Vol. III 1879.

Indian Architecture (Islamic period) by Percy Brown, Bombay, 1942

Journal of the Indian Historical Research Institute, 1929.

Journal of the Royal Asiatic Society Vol. XV

Mahārāṇā Kuṁbhā by Harbilas Sarda–second edition, 1932, Ajmer.

Mandu, Publications Division–Ministry of Information and Broadcasting, Government of India, Delhi 8.

The Ruins of Mandoo, by J. Guiaud of Nice, Dhar, 1892.

Tod's Annals and Antiquities of Rajasthan Vols. I, II, III by James Tod, Oxford university press, 1920

राजपूताने का इतिहास (पहला खंड) पंडित गौरीशंकर हीराचंद ओझा, अजमेर वि.सं. १९८२

| | | |
|---|---|---|
| प्राचीन लेखमाला | भाग १ | मुम्बई |
| ,, ,, | भाग २ | ,, |
| ,, ,, | भाग ३ | ,, |

भावनगर प्राचीन शोध संग्रह—वजेशंकर गौरीशंकर, राजकोट १८८७

| | |
|---|---|
| पाठ्यरत्नकोश | सं० कुन्हन राजा |
| भरत-नाट्यशास्त्र | गायकवाड संस्कृत सिरीज़ बड़ोवा |
| राष्ट्रौढ वंश महाकाव्य | ,, ,, ,, ,, |
| शब्दकल्पद्रुम | |
| संगीत-रत्नाकर | भाग ७ आनन्दाश्रम सं० सिरीज़ |




# ERRATA

| Page | Line | Incorrect | Correct |
|---|---|---|---|
| 2 | 28 | Nṛtyaratankos'a | Nṛtyaratnakoṣ'a |
| 3 | 25 | | Add II in the ullāsa coloumn |
| 5 | 10 | the | that |
| 7 | 1 fn. | very | every |
| 11 | 13 | Muharik | Mubarik |
| 12 | 1n | Henay | Henry |
| 12 | 3 | Nayaka | Nāyaka |
| 12 | 7 | Eri | Ere |
| 19 | 12 | Rāghvadeva | Rāghavadeva |
| 20 | 1 | Rāghavdeva | Rāghavadeva |
| 20 | 26 | Rankpur | Rānakpur |
| 20 | 3n | Rajaputana | Rajputana |
| 23 | 18 | Hymayun | Humayun |
| 23 | 31 | Mahmodan | Muhammad |
| 23 | 11 | rular | ruler |
| 24 | 31 | Mahmodan | Mohammedan |
| 25 | 12 | Sadhu, Saharan, Sadharan, | Sādhu, Sahāran, Sādhāran. |
| 25 | 18 | Muhamud | Mahmud |
| 27 | 16 | Baily's | Bayley's |
| 28 | 4 | for | far |
| 29 | 39 | IVX | XVI |
| 30 | 27 | Ain-i-Akari | Ain-i-Akbari |
| 31 | 9 | Khaānān | Khānā |
| 32 | 3n | Udaipu | Udaipur |
| 33 | 37 | Sadari | Sādari |
| 34 | 25 | Nātyas'astra | Nāṭyasāstra |
| 34 | 19 | | delete the mark „ |
| 36 | 12 | Prtas | Prāsā |
| 36 | 14 | Rūpavtara | R pavatāra |
| 36 | 18 | Dipkiā | D pikā |
| 37 | 12 | intrugues | intrigues |
| 37 | 31 | Colnol | Colonel |

# शुद्धिपत्रक

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ४ | ३ | ०निमाणम् | ०निर्माणम् |
| ४ | २१ | निकृष्टं | विकृष्टं |
| ५ | १९ | ०पटवाद्यैश्व | ०पटहाद्यैश्च |
| ४१ | १६ | स्यादन्त भूतं | स्यादन्तर्भूतं |
| ४२ | – | after line 4 Add heading | हस्ताः |
| ४९ | १३ | प्रस्थ(?स्थि) ते | प्रस्थके |
| ५७ | २५ | इत्युदद्रृत्तौ | इत्युद्वृत्तौ |
| ५९ | ४ | सूचीमुखादत्र | सूचीमुखावत्र |
| ७९ | ६ | चलितः | वलितः |
| ६८ | ११ | जपलक्षण० | जपभक्षण० |
| १०२ | १ | नवोढा लज्जिते | नवोढालज्जिते |
| १०६ | ६ | आर्वतित कनिष्ठा० | आर्वतितं कनिष्ठा० |
| १३१ | २० | जङ्घा लङ्घनिका | जङ्घालङ्घनिका |
| १४१ | ०२ | सोऽर्धजानुः स सूचीको | सार्धजानुः ससूचीको |
| १४७ | २४ | वलितो स | वलितोरु |
| १५३ | १३ | नूपुरपाटिकाम् | नूपुरपादिकाम् |
| १७८ | ११ | ०स्तदा वृत्यापि | ०स्तदावृत्यापि |
| १७९ | २४ | लता वृश्चिकमेव | लतावृश्चिकमेव |
| १८१ | १३ | श्रेयः परम० | श्रेयःपरम० |
| | १८ | विद्यु द्भ्रातः | विद्युद्भ्रान्तः |
| १८८ | २ | Add डा०. no. 8 | |